By

KRISHNAYAJJVA

With the commentary of
Pandit Sashibhusan Smrititirtha

Edited by
PANDIT ROHINIKANTA SANKHYATIRTHA
SIDDHANTABAGISH

President By
Ch. M. Veerabhadra Sharma

Published by
AKHILBANDHU BHATTACHERYA
58, Cornwallis street, Calcutta.
1929

Ten Annas

सटीक-

# मीमांसा-परिभाषा ।



सूर्य्यनारायणं वन्दे देवीं त्रिपुरसुन्दरीम् ।
गुरूनधिगतार्थांश्च निरन्तरमहं भजे ॥ १ ॥
बालानां शास्त्रसिद्धार्थलेशबोधाय धीमताम् ।
मीमांसापरिभाषेयं क्रियते कृष्णयज्वना ॥ २ ॥

---

श्रीविश्वनाथमभवं भवभीतिहेतुम्
सेतुं भवाब्धितरणे हृदये निधाय ।
वाराणसीवसतिमेत्य वितन्यतेऽसौ
टीका परोपकृतये शशिभूषणेन ॥
विश्वेश्वरपदद्वन्द्वं नत्वानन्दप्रदं मुदा ।
मीमांसापरिभाषाया व्याख्येयं लिख्यतेऽधुना ॥

(१) अशेषमीमांसाशास्त्रपारदृश्वा श्रीकृष्णयज्वा ग्रन्थकृदभीष्टदेवतानामोच्चारणरूपं मङ्गलमाचरन् शिष्यप्रवृत्त्यर्थं ग्रन्थस्याभिधेयप्रयोजनसम्बन्धांश्च प्रदर्शयन्नादौ निबध्नाति सूर्य्येत्यादि। सूर्य्यनारायणेति ग्रन्थकृतो जनकस्य नाम त्रिपुरसुन्दरीति तस्य मातुर्नाम। अत्र सूर्य्यनारायणयोर्देवतानामतया तदुच्चारणेन मङ्गलं बोध्यम्। अत्र सूर्य्यशब्दो-नारायणशब्दश्च मिलित्वा नरवाचकोऽपि प्रत्येकं देवतानामतया तदुच्चारयतः शिवमुत्पादयति। अधिगतेति अधिगतो ज्ञातोऽर्थो यैस्ते इति विग्रहः। निरन्तरमविरतमित्यर्थः।

(२) द्वितीयश्लोकार्थस्तु धीमतां बालानां शास्त्रसिद्धार्थलेशबोधाय इयं मीमांसा-

मीमांसा विषयः

इह खलु महर्षि-जैमिनिना द्वादशलक्षण्यां ( ३ ) पूर्व्व-मीमांसायां धर्म्माधर्म्मावेवानुष्ठानोपयोगितया विचारितौ। तत्र वेदबोधितेष्टसाधनताको धर्म्मः, ( ४ ) यथा यागादिः। वेदबो-

---

परिभाषा लक्ष्मणयज्वना क्रियत इत्यन्वयः। शास्त्रेति, शास्त्रसिद्धानां शास्त्रगम्यानां 'षिधु गत्या'मित्यस्माद्धातो र्निष्पन्नतया तथार्थलाभात्। अर्थानां पदार्थानां लघुबोधाय सूक्ष्मबुद्धये इत्यर्थः। तथाचामरः 'लववलेशकणाणवः' इति। परिभाषा सुव्यक्तोक्तिः 'भाषव्यक्तायां वाची'त्यस्मान्निष्पन्नत्वात्। क्रियते अनेन ग्रन्थेनेति शेषः। तथाच लक्षणोदाहरणादिदर्शनेन जैमिनीयमीमांसा अनेन सुव्यक्तीक्रियत इत्यर्थः। अत्राभि-धेयामीमांसापरिभाषा प्रयोजनं धीमतां सूक्ष्मबोधः। सम्बन्धश्च ग्रन्थाभिधेययोः ज्ञाप्य-ज्ञापकभावः प्रयोजनेन सह ग्रन्थस्य जन्यजनकभाव इति।

( ३ ) इहेति। परोक्तपूर्व्वमीमांसायामित्यनेन सम्बन्धः। द्वादशेति लक्ष्यन्ते ज्ञायन्ते तत्तत् पदार्था एभिरिति लक्षणान्यध्यायाः द्वादशानां लक्षणानां समाहारो द्वादशलक्षणी तस्यां पूर्व्वमीमांसायामित्यर्थः। समाहारश्चात्र चतुर्युगं त्रिभुवनमितिवत् छन्दपेक्षया बोद्धव्यः द्वादशाध्यायानां मेलनासम्भवात्।

( ४ ) वेदेति। वेदबोधिता इष्टसाधनता यस्येति विग्रहः। भोजनादावति-व्याप्तिवारणाय वेदेति। श्येनयागादावतिव्याप्तिवारणाय इष्टसाधनतेति। यद्वा इष्ट-साधनतां परिहाय वेदबोधितो धर्म्म इत्युक्तौ स्वर्गादेरपि स्वर्गकामोऽश्वमेधेन यजेत इत्यादि वेदबोधितत्वेन तत्रातिव्याप्तिरित्यत इष्टसाधनता यागविशेषणमिति। नन्वेवमपि अश्वमेधेन शुध्येयुरित्युक्तपापक्षयकामकर्त्तव्याश्वमेधयागादौ पापक्षयस्येष्टत्वेन तत्-साधनता यागादाविव पापेऽप्यस्ति ध्वंसस्य प्रतियोगिजन्यत्वादतस्तत्रातिव्याप्तिरिति चेन्न यतो वेदबोधितेति साधनताविशेषणं नत्विष्टविशेषणं तथाच सति वेदबोधिता इष्टस्य साधनता यागगतैव न पापगता प्रतियोगिनः स्वध्वंसादिजनकताया वेदादप्रतीतेः। ननु न काचिदिष्टसाधनता वेदात् प्रतीयते स्वर्गकामोऽश्वमेधेन यजेतेत्यादौ तद्वाचक-पदाभावात्। सत्यं यागो यदि स्वर्गसाधको न स्यात्तदा स्वर्गकामीयकृतिसाध्योऽपि न

धितानिष्टसाधनताकोऽधर्म्मः, (५) यथा कलञ्जभक्षणादिः। तयोश्च वेदः स्मृतिराचारश्च प्रमाणम्। तत्र वेदः स्वतन्त्र-प्रमाणम्। इतरौ तु वेदमूलकतया प्रमाणम्। तत्र वेदो द्विविधः—मन्त्ररूपो ब्राह्मणरूपश्चेति। तत्र प्रयोगकालीनार्थ-स्मरणहेतुतया मन्त्राणामुपयोग इति वक्ष्यते। प्रयोगोऽनुष्ठानं तत्कालीनेत्यर्थः। विधायकं (६) वाक्यं ब्राह्मणम्। ब्राह्मण-

---

स्यादित्यर्थापत्त्या यागादाविष्टसाधनता वेदादेव प्रतीयत इति न कश्चिद्दोषः। वस्तुतस्तु मीमांसकमते यागादाविष्टसाधनता वैदिकशब्देरेव प्रतीयते। तथाच स्वर्गकामो यजेते-त्यादौ आख्यातत्वांशेनार्थीभावनोच्यते सा च किं केन कथमित्यंशत्रयविशिष्टा तत्र साध्याकाङ्क्षायां स्वर्ग एव साध्यत्वेनान्वेति साधनकाङ्क्षायां यागः करणत्वेनान्वेति एवं स्थिते यागेन स्वर्गं भावयेदिति वाक्यार्थपर्य्यवसानात् स्वर्गो यागसाध्य इति वेदादेव प्रतीयते।

(५) धर्म्मं निरूप्याधर्म्मो निरूप्यते वेदबोधितानिष्टेति। वेदबोधिता अनिष्टसा-धनता यस्येति विग्रहः। अत्रापि कलञ्जभक्षणादावनिष्टसाधनता पूर्व्ववदर्थापत्त्यैव प्रत्येतव्या। पदस्खलनात् पतितस्य गच्छतो गमनेऽतिव्याप्तिवारणाय वेदबोधितेति ननु वेदनिषिद्धोऽधर्म्म इत्युच्यतां किमनिष्टसाधनतयेति चेन्मैवं निषिद्धं नाम निषेधविधि-बोध्यं तथात्वे प्रवृत्तिमान् 'मा कलञ्जं भक्षये'दित्यादौ प्रवृत्तिमतां पुरुषाणामपि निषेध-विधिबोध्यत्वात् तेषामधर्म्मत्वमापद्येत। विषयतायाश्च विशिष्टायां गौरवमेव न किञ्चि-ल्लाघवमिति। अनिष्टसाधनतापि साक्षादेव वक्तव्या अन्यथा कलञ्जभक्षणसाधकस्य प्रवृत्तिमत्पुरुषस्यापि परम्परानिष्टसाधनत्वात् अतिव्याप्तिः स्यात्।

(६) विधायकमिति। विधायकं कर्त्तव्यतया बोधकं वाक्यं ब्राह्मणमित्यर्थः। ननु वेदानां द्वैविध्यमेव अर्थवादानां विधायकवाक्यभिन्नत्वमित्याह-ब्राह्मणशेषश्चेति। तथाचार्थवादानां विधेयप्राशस्त्यबोधकत्वात् विधायकवाक्यरूपब्राह्मणशेष एवार्थवादो ना तस्मात् पृथगित्यर्थः।

शेषस्यार्थवादः (७)। तस्य विधेयप्राशस्त्यप्रतीतिजननद्वारा विधिवाक्यैकवाक्यतया प्रामाण्यमिति च वक्ष्यते।

तच्चानेकविधम्, कर्मोत्पत्तिवाक्यम्, गुणवाक्यम्, फलवाक्यम्, फलाय गुणवाक्यम्, सगुणकर्मोत्पत्तिवाक्यमित्यादिभेदात्।

तत्र येन वाक्येनेदं कर्म कर्त्तव्यमिति बोध्यते, तत् कर्मोत्पत्तिवाक्यम्। यथा अग्निहोत्रं जुहोतीति (८)। अत्राग्निहोत्रहोमः कर्त्तव्यतया विधीयत इति कर्मोत्पत्तिवाक्यम्।

विहिते कर्मणि तदङ्गतया द्रव्यदेवतादिविधायकं वाक्यं गुणवाक्यम्। यथा दध्ना जुहोतीति, गुणवाक्यमिदम्। कर्माङ्गतया विहितत्वमेव दध्यादेर्गुणत्वम्। अत्र होमस्योद्देश्यत्वं नाम मानान्तरप्राप्तत्वे सति विधेयान्वयितया निर्देश्यत्वम्। तस्यैव मानान्तरप्राप्तस्य पुनः कथ्यमानरूपत्वमनुवाद्यत्वं दध्यादिगुणान्वयतया प्राधान्यञ्च। दध्यादेस्तु मानान्तराप्राप्तत्वादत्रैव विधेयत्वं होमसाधनत्वाच्च होमापेक्षया गुणत्वं पुरुषेणानुष्ठीयमानत्वाच्चोपादेयत्वं चेति। अत्र मानान्तरप्राप्तत्वम्, मानान्तरज्ञातत्वम्, अप्राप्तत्वञ्चाज्ञातत्वमिति बोध्यम्।

---

(८) यथेति। 'अनुवाद्यमनुक्त्वा तु न विधेयमुदीरयेदि'त्युक्तेः जुहोतीत्यनेनाग्निहोत्रं जुहोतीति वाक्यप्राप्तमग्निहोत्रमनूद्य तदुद्देशेन दधिरूपो गुणो विधीयते तत्र किमुद्देश्यत्वमनुवाद्यत्वं वेति शिष्यजिज्ञासायामाह—उद्देश्यत्वं नामेति तस्यैवेति च। उद्देश्यत्वं नाम तस्यैव यत्र विधेयान्वयितया निर्दिश्यते अनुवाद्यत्वञ्चान्वयित्वेन निर्देश्यत्वाभावेऽपि-

उत्पन्नस्य (९) कर्म्मणः फलाकाङ्क्षायां फलसम्बन्धबोधको विधिः फलविधिः। यथा अग्निहोत्रं जुहुयात् स्वर्गकाम इति। अत्र यः स्वर्गं कामयते स तत्साधनत्वेनाग्निहोत्रनामकं होमं भावयेदित्यग्निहोत्रवाक्योत्पन्नस्य कर्म्मणः फलसम्बन्धो बोध्यत इति फलवाक्यमिदम्।

प्राप्तं कर्म्माश्रित्य फलाय गुणविधौ फलाय गुणवाक्यं, यथा दध्नेन्द्रियकामस्य जुहुयादिति। अत्राग्निहोत्रवाक्योत्पन्नं होममाश्रित्येन्द्रियफलाय दधिरूपो गुणो विधीयते, होमाश्रितेन दध्ना इन्द्रियरूपं फलं भावयेदिति। होमाश्रितेन होमकरणीभूतेनेत्यर्थः। अयमेव गुणफलविधिर्गुणकामविधिरपि चोच्यते।

द्रव्यदेवतादि- (१०) गुणविशिष्टकर्म्मविधायकं वाक्यं सगुणकर्म्मोत्पत्तिवाक्यम्। यथा सोमेन यजेतेति। अत्र सोमलताविशिष्टो यागो विधीयते। विशिष्टविधावपि विशेषणस्यार्थाद्विधिः। क्वचित् कर्म्मोत्पत्तिवाक्यमेव फलसम्बन्धबोधकमपि भवति। यथा—उद्भिदा यजेत पशुकाम इति। अत्रोद्भिन्नामको यागो वाक्यान्तराविहित एव पशुकामस्य पशु-

---

भवतीत्यनयोर्भेदः। सगुणकर्म्मोत्पत्तिवाक्ये यागस्योद्देश्यत्वनिरासार्थं सत्यन्तं। अन्यार्थमनुद्यमानस्य उद्देश्यत्ववारणाय विधेयान्वयितयेति।

(९) उत्पन्नस्येति। उत्पत्तिवाक्यावगतस्येत्यर्थः।

(१०) सगुणकर्म्मोत्पत्तिवाक्यमाह द्रव्यदेवतादीति। गुणविशिष्टकर्म्मविधायकं वाक्यमेव सगुणकर्म्मोत्पत्तिवाक्यं द्रव्यदेवतादीति प्रदर्शनार्थं उद्भिदेति। एकस्यैवास्य कर्म्मोत्पत्तिवाक्यत्वं फलवाक्यत्वञ्चेति भावः।

फलाय विधीयत इत्येकमेवेदं वाक्यं फलसाधनतया [ याग ] कर्म्मविधायकम् । प्रयोगविधि:

प्रधानविधिरेवाङ्गविधिभिरेकवाक्यतया महावाक्यतापन्नः सन् ( ११ ) सर्व्वाङ्गविशिष्टप्रधानप्रयोगविधायकत्वात् प्रयोगविधिरुच्यते । यथा (१२)—अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यत्राग्निहोत्रहोमेन स्वर्गं भावये(१३)दित्यर्थः प्रतीयते । भावयेत उत्पादयेत् कुर्य्यादिति यावत् । अत्र कथमनेन होमेन स्वर्गं कुर्य्यादिति कथम्भावाकाङ्क्षा जायते यथा कुठारेण द्वैधीभावं कुर्य्यादित्युक्ते भवत्याकाङ्क्षा कथमनेन द्वैधीभावं कुर्य्यादिति, अत्रोद्यमन-(१४) निपातनादिसहायेनेति गम्यते। तद्वदत्राप्यग्निं प्रणयत्यग्निषु समिध [ दध्ना नोत्पाद्यङ्ग ] आदधातीत्याद्यङ्ग-

---

(११) महावाक्यतापन्न इति। अथ वाक्योऽन्वयी महावाक्यमित्यालङ्कारिकाः । तत्राग्निहोत्रं जुहोति दध्ना जुहोतीति वाक्यद्वयं एकतापन्नं दध्ना अग्निहोत्रं जुहोतीत्येवं रूपं महावाक्यमुच्यते। महावाक्यतापन्नस्य प्रधानविधिरेव प्रयोगविधिरुच्यते। अस्य च प्रधानप्रयोगविधायकत्वात् विधायकवाक्यरूपत्राह्मणस्य प्रयोगविधित्वेनापि विभागः प्रत्येतव्य इति भावः ।

(१२) महावाक्यतापन्नं प्रधानविधिं दर्शयति यथेति ।

(१३) भावयेदिति। ननु भावयेदित्यस्य कुर्य्यादित्यर्थः कथं सङ्गच्छते ? कृ-भाविधात्वोरर्थयोर्भिन्नत्वात् । नैवं भावयेदित्यत्र भाविधातुनार्थभावनोच्यते, सा च प्रवृत्त्याख्यकृतिरूपा कृधातुना च कृतित्वेन कृतिसामान्यस्यैवाभिहितत्वादिति ।

(१४) तत्रोद्यमनेति। उद्यमननिपातनादिः सहायो यस्य काष्ठसंयोगस्येति विग्रहः, तेन उद्यमननिपातनादिसहायेन काष्ठसंयोगेनेत्यर्थः। उद्यमननिपातनाभ्यां काष्ठसंयोगाभावे द्वैधीभावानिष्पत्तेः ।

विधिविहितप्रणयनसमिदाधानायतन(१५)शोधनादिकाङ्गकलाप-जनितोपकारसहितेनाग्निहोत्रहोमेन स्वर्गं कुर्य्यादिति प्रकरण-कल्पितेन महावाक्येन स्वर्गाय साङ्गाग्निहोत्रप्रयोगो विधीयत इत्येतादृशः प्रयोगविधिः। अङ्गजातमेवेत्यभाव इति, इति कर्त्तव्यतेति चोच्यते। अत्राग्निहोत्रहोमः प्रधानं प्रणयनादिकं सर्व्वमङ्गम्।

आपूर्विसाधनम्.

नन्विद-(१६) मनुपपन्नम्—आशुतरविनाशिनां कर्म्मणां कालान्तरभाविस्वर्गादिफलसाधनत्वानुपपत्तेरिति(१७) चेन्नैवम्। विहितनिषिद्धकर्म्मणां तत्तद्वाक्यैस्तत्तत्फलसाधनत्वेऽवगते आशुतरविनाशिनां कर्म्मणां कालान्तरभाविफलसाधनत्वोप-पत्त्यर्थमन्तरा पुण्यपापरूपमपूर्वं कल्प्यते (१८)। ततश्च यागा-

---

(१५) आयतनेति। आश्वादौ पुण्येष्वायतनेषु चेत्युक्तेः अन्यत्रापि तथा कल्प-नात् आयतनशोधनं यागादावप्यङ्गम्।

(१६) स्वर्गं कुर्य्यादिति यदुक्तं तन्न सम्भवतीत्याशङ्कते नन्विति। इदम् अग्निहोत्रादेः स्वर्गसाधनत्वम्। अनुपपत्तिं दर्शयति आश्विति। आशुतरविनाशिनां तृतीयक्षणवृत्तिध्वंसप्रतियोगिनाम्।

(१७) साधनत्वानुपपत्तेरिति। नचात्र साध्याविशेषदोषो घटते तथा हि इद-मग्निहोत्रादेः स्वर्गसाधनत्वमनुपपन्नं कालान्तरभाविस्वर्गादिफलसाधनत्वानुपपत्तेरित्युक्तौ प्रथमान्तपदोपस्थाप्यतावच्छेदकस्यैव साध्यत्वेन स्वर्गसाधनतानुपपत्तिरेव साध्यं हेतुरपि कालान्तरभाविस्वर्गसाधनतानुपपत्तिरूपः स एवेति अनयो रभिन्नत्वादिति वाच्यम्। आशुतरविनाशिनां स्वर्गादिसाधनत्वानुपपत्ते रित्युक्तत्वात् आशुतरविनाशिनिष्ठस्वर्गादि-फलसाधनत्वानुपपत्तिर्हेतुरिति हेतो र्भिन्नत्वात्।

(१८) अपूर्व्वं कल्प्यत इति। ननु कथमपूर्व्वकल्पना क्रियते यागादिध्वंसस्य कार-

देरपूर्वद्वारा स्वर्गसाधनत्वं न साक्षात्, तदेव फलापूर्वम्। तत् का[क]रणत्वञ्च प्राच्योदीच्याङ्गविशिष्टस्य(१९) प्रधानस्य भवति, न प्रधानमात्रस्य, (२०) प्रधानमात्रादेव फलापूर्वजनने फलस्यापि तत एव सिद्धेरङ्गानामानर्थक्यापत्तेः।

ननु सर्व्वाङ्गविशिष्टस्य प्रधानस्यापूर्वजनकत्वमयुक्तम्, आशुतरविनाशिनः प्रधानस्याङ्गसाहित्याभावादिति (२१) चेन्न।

---

पत्वमुच्यतां न च ध्वंसस्यानन्त्यात् स्वर्गधारापत्तिरिति वाच्यम् अपूर्व्वकल्पनेऽपि तद्दोषस्य दुर्व्वारत्वात्। प्रागभाववत्ता प्रत्यासत्त्या स्वजन्यफलस्य स्वजन्यफलं प्रति प्रतिबन्धकत्वं कल्प्यते चेदस्मन्मतेऽपि ध्वंसप्रागभावसमवायान्यतमसम्बन्धेन स्वजन्यफलं प्रति स्वजन्यस्वर्गादिफलस्य प्रतिबन्धकत्वकल्पनया तद्दोषापनयनसम्भवात्। सम्बन्धस्य गुरुत्वेऽप्यनन्तापूर्व्वकल्पनापेक्षया लाघवादिति चेन्नैवं पुण्यपापरूपापूर्व्वकल्पनं विना पापस्य प्रायश्चित्तनाश्यत्वं पुण्यस्य कर्म्मनाशाजलस्पर्शादिनाश्यत्वञ्च नोपपद्यते ध्वंसस्य ध्वंसाभावादिति सुधीभिर्विभावनीयमिति।

(१९) प्राच्येति। प्रधानदक्षिणायाः पूर्व्वमनुष्ठेयमङ्गं प्राच्याङ्गम्। दक्षिणानन्तरमनुष्ठेयमुदीच्याङ्गम्।

(२०) न प्रधानमात्रस्येति। प्रयाससफलजनकत्वं न प्रधानमात्रस्येत्यर्थः। यथा श्रुतार्थत्वे फलवत् सन्निधावफलं तदङ्गमिति जैमिनिविरोधापत्तेः। फलानां प्राशस्त्यजनकत्वं प्रधानफलातिरिक्तफलजनकत्वञ्चाङ्गानामपि स्वीक्रियते। यस्य पर्णमयी जुहुर्भवति न स पापश्लोकं शृणोतीत्यादौ गुणेऽपि फलश्रवणात्। अतो जैमिनिसूत्रे अफलमित्यस्य प्रधानजन्यफलाजनकमित्यर्थः सिद्ध्यति। आनर्थक्यापत्तेरिति फलानां प्राशस्त्यजनकत्वमपि प्रधानस्येत्यङ्गीकारे अङ्गानामानर्थक्यापत्तेरित्यर्थः।

(२१) अङ्गसाहित्याभावादिति। ध्वस्तस्य प्रधानस्य उदीच्याङ्गसाहित्यं ध्वंसान्नाच्च प्राच्याङ्गानां प्रधानसाहित्यं न सम्भवतीत्याशङ्कार्थः।

प्रधानकर्म्मणः स्वरूपेणाङ्गसाहित्याभावेऽपि उत्पत्त्यपूर्व्वद्वारा(२२) साहित्यसम्भवात्। प्रधानस्य सर्वाङ्गसाहित्यसिद्ध्यर्थं प्रधानकर्म्मपरमापूर्वयोर्मध्ये प्रधानमात्रजन्यमुत्पत्तिनामकं किञ्चिदपूर्वमस्तीत्यङ्गीकारात्। एवमङ्गानामपि परस्परसहितानामेव प्रधानोपकारकत्वात्तेषां स्वरूपेण साहित्याभावात् तत्तदुत्पत्त्यपूर्वद्वारा साहित्यं बोध्यम् (२३)। अङ्गानां प्रधानोपकारकत्वं नाम प्रधानस्य फलापूर्वजननसामर्थ्योभ्यु स्वीकरणमेव। दर्शपौर्णमासयोस्तु विशेषः (२४)। यदाग्नेयोऽ(२५)ष्टाकपालोऽमा-

---

(२२) उत्पत्त्यपूर्व्वद्वारेति। नन्वङ्गानां कलिकापूर्व्वैरेव प्रधानसाहित्यसम्भवे कुत उत्पत्तिनामापूर्व्वान्तरं स्वीक्रियते सैवमेतन्मते उत्पत्त्यपूर्व्वैरेवाङ्गानां प्रधानोपकारकत्वं तदन्यकलिकापूर्व्वास्वीकारात्। यद्येवं प्रधानस्यापि परमापूर्व्वद्वारैव साहित्यसम्भवे प्रधानकर्म्मपरमापूर्व्वयोरन्तरा उत्पत्तिनामकं किञ्चिदपूर्व्वमस्तीति कथमङ्गीकुरुते? अत्रोच्यते सर्व्वाङ्गोपेतप्रधानस्य परमापूर्व्वजनकत्वात् परमापूर्व्वोत्पत्तेः पूर्व्वमेवाङ्गानां प्रधानसाहित्यं-सम्पाद्यं तच्चापूर्व्वान्तरं विना न सम्भवति। अङ्गानान्तु उत्पत्त्यपूर्व्वैरेव परस्परसाहित्यं-सम्पाद्य तैरेव प्रधानफलगतप्राशस्त्यजननसम्भवात्। नापूर्व्वान्तरं स्वीकार्य्यमिति।

(२३) साहित्यं बोध्यमिति। साहित्यमत्र परस्परमेलनरूपम्। कदाचित् सहत्वरूपमपि सम्भवति। सहत्वन्तु परस्परसापेक्षाणामतुल्यरूपाणामेकक्रियासम्बन्धित्वमिति। तथा चाङ्गप्रधानैकवाक्यतापन्नप्रयोगविधौ तत्तदङ्गविशिष्टप्रधानत्वेनैकरूपेणोपस्थितिसम्भवात् अङ्गप्रधानयोः परस्परविशेषणविशेष्यभावापन्नत्वादेकस्यां यागक्रियायां सर्व्वेषामन्वयात् लक्षणसङ्गतिः।

(२४) दर्शपौर्णमासयोस्तु विशेष इति। विशेषः परत्र व्यक्तीभविष्यति। स च त्रिकाल्तिकादेकैकमपूर्व्वं जायते इत्येवं रूपः।

(२५) यदाग्नेय इति। यदिति श्रुतद्रव्यदेवतासम्बन्धानुमितो यागो यजेतेति

वस्यायां पौर्णमास्याञ्चाच्युतो भवतीत्याग्नेययागो विहितः। ताभ्या(२६)मेतमग्नीषोमीयमेकादशकपालं पौर्णमास्यां प्रायच्छ-दित्यग्नीषोमीययागो विहितः। 'उपांशु(२७)याज[ग]मन्तरा यजती'त्युपांशुयाजः[गः]—ताव—ब्रूता(२८)मग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति वाक्यात् पौर्णमास्यां विहितः। एतानि पौर्णमास्यां प्रधानानि। एषामाग्नेयाग्नीषोमीयोपांशु-याजा[गा]नां तत्तद्वाक्यावगतपौर्णमासीकालसम्बन्धं निमित्ती-कृत्य 'य एवं विद्वान् पौर्णमासीं यजत' इति विद्वद्वाक्ये पौर्ण-

---

कल्पितपदेन विधीयत इति परत्रोक्तेः कल्पितयजेत इति क्रियाविशेषणं वाक्यार्थस्तु अमावस्यायां पौर्णमास्याञ्च यजेत। यत् यजेत यत् यजनं स आग्नेयाष्टकपालस्तन्नाम प्रसिद्धोऽमावस्यायां पौर्णमास्याञ्चाच्युतो भवतीत्यर्थः। अमावस्या पौर्णमासीपदमनुसङ्गे-नोभयत्रान्वेति।

(२६) ताभ्यामिति। ताभ्यामाग्नेयाष्टाकपालोपांशुयागाभ्यामेतमग्नीषोमीयमेका-दशकपालं पौर्णमास्यां प्रायच्छत्। विभक्तिविपरिणामेन विदध्यादित्यर्थः। एतमग्नि-षोमीयमेकादशकपालमित्यभिधानात् यागोऽपि तन्नामा प्रतिपत्तव्यः। पूर्व्ववाक्ये यदित्य-नेनार्थतो यागस्याग्नेयाष्टाकपालनामवत्।

(२७) उपांश्विति अन्तरा मध्ये यजतीत्यर्थः।

(२८) ताविति। तौ अग्निषोमौ अब्रूतां किमित्याकाङ्क्षायामाह—नाविति नौ आवयोः उपांशुपौर्णमास्यां यजन् आज्यस्यैव भवतीत्यर्थः। एतेनोपांशुयागस्य अग्नीषोम-देवताकत्वं आज्यद्रव्यकत्वं पौर्णमासीकर्तव्यत्वञ्च प्रतिपादितम्। उपांशु इत्यस्य यागेऽ-भेदान्वयात् क्रियाविशेषणत्वादेव नपुंसकत्वम् विद्वद्वाक्ये विद्वत्पदघटितवाक्ये।

मासीपदेनैकवचनान्तेन(२९) समुदायरूपेणानुवादः। तेन(३०) वेदे यत्र यत्र पौर्णमासीशब्दः, तत्र तत्राग्नेयादिसमुदायोपस्थितिः। ननु (३१) यदाग्नेय इतिवाक्ये यागवाचकपदस्याश्रवणात् कथं यागविधायकत्वमिति चेन्नैवम्। अग्निर्देवता अस्य पुरोडाशस्येत्यर्थे विहितदेवतातद्धितान्त आग्नेयशब्दः, तस्य पुरोडाशपदसामानाधिकरण्याद्द्रव्यदेवतासम्बन्धोऽवगतः। स च यागमन्तरेण न सम्भवति द्रव्यदेवतासम्बन्धस्य यागादन्यत्र क्रियायामसम्भवात् यागक्रियायामेव सम्भवो वाच्यः। देवतोद्देशेन द्रव्यत्यागस्य यागरूपत्वाङ्गीकारात्। अतः श्रुतद्रव्यदेवता-

---

(२९) एकवचनान्तेनेति। ननु यदि पौर्णमासीपदेन त्रयो यागा उपस्थीयन्ते तदा तस्माद्बहुवचनमेव भवितुमर्हति इत्यत आह—समुदायरूपेणेति।

(३०) अनुवादप्रयोजनमाह—तेनेति। वेद इति करणात् "दर्शं वा पौर्णमासीं वा प्रारभ्यस्नानमाचरेत्" इत्यादिषु, तौ पौर्णमास्यान्तिथावित्यादिलौकिकप्रयोगे च पौर्णमासीपदस्य तिथिवाचकत्वेऽपि न व्यभिचारः। ननु वेदेऽपि "पौर्णमास्यां पौर्णमास्या यजेत" इत्यादौ प्रथमपौर्णमासीपदं तिथिवाचकमेव दृश्यते। सत्यं वेदे यत्र यत्रेत्यस्यायमर्थः। यत्र यत्र वेदे पौर्णमासीशब्दो दर्शशब्दस्य अभेदसम्बन्धेन यागान्वितो दृश्यते तत्र तत्र पौर्णमासीकर्त्तव्यत्वेन दर्शकर्त्तव्यत्वेन च रूढ्या लक्षणया यागत्रयमेवोपस्थापयति। एवन्तर्हि वेद इत्यपि स्वरूपकथनमात्रं वेदादन्यत्र तादृशप्रयोगाभावादिति।

(३१) यदाग्नेय इति वाक्यस्य यागविधायकत्वमाशङ्कते नन्विति। ननु बहुव्रीहिणा यागबोधनसम्भवात् कथं यागाश्रवणमित्युच्यते नैवं बहुव्रीहौ लक्षणाप्रसङ्गात् स्तुतिर्हि अनुवादकत्वात् यथा प्राप्तलक्षणां सहेत न विधिरित्युक्तेः विधौ लक्षणायाः सर्व्वथा परित्यागात् कल्पितयजेतेति पदेन विधानमेवयुक्तमिति।

सम्बन्धानुमितो यागो यजेतेति कल्पितपदेन विधीयते—अग्निदेवत्यपुरोडाशद्रव्यकामावास्यादिकालकर्त्तव्ययागेनेष्टं भावयेदिति। एवं यत्र द्रव्यदेवतासम्बन्धमात्रं श्रूयते सौर्य्यं चरुं निर्वपेदित्यादौ, तत्र द्रव्य-[सूर्य्य] देवतासम्बन्धानुमितो यागो विधीयत इति न कश्चिद्दोषः। लिङाद्यभावेपि [illegible]

ननूपांशुयाज[ग]वाक्ये यजिश्रवणेऽपि विधिप्रत्ययस्य लिङादेरभावात् कथं विधायकत्वमिति चेन्नैवम्। यजतीत्यस्य यजेतेति विपरिणामेन विधायकत्वसम्भवात्। एवं यत्र लिङादिनं श्रूयते 'व्रीहीन् प्रोक्षति' 'समिधो यजती'त्यादौ, तत्र विपरिणामो बोध्यः (३२) केचित्तु यजतीत्यस्य पञ्चमलकारत्वाङ्गीकारात् विधायकत्वसम्भव इत्याहुः। तथा ऐन्द्रं दध्यमावास्यायां ऐन्द्रं पयोऽमावास्यायामिति वाक्यविहितौ सान्नाय्ययागौ यदाग्नेय इतिवाक्यविहिताग्नेयश्चामावास्यायां प्रधानानि। एषां त्रयाणां 'य एवं विद्वानमावास्यां यजते' इतिवाक्ये अमावास्यामिति नाम्ना द्वितीयैकवचनान्तेन समुदायरूपेणानुवादः। तेन वेदे यत्र दर्शशब्दोऽमावास्याशब्दो वा श्रुतस्तत्र यागसमुदायोपस्थितिः। त्रिकस्य त्रिकस्यामावास्यापौर्णमासीशब्दाभ्यां समुदायरूपेण विद्वद्वाक्येऽनुवादस्य प्रयोजनन्तु दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेत्यादौ द्विवचनोपपत्तिः। अन्यथा षण्णामाग्नेयादियागानां बहुत्वाद्दर्शपौर्णमासैरिति बहुवचनं

---

(३२) विपरिणामी बोध्य इति। विपरिणामश्च प्रकृतार्थोपयोगिपरिवर्त्तनम्।

स्यात्। मानान्तरेण (३३) प्राप्तार्थस्य पुनः श्रवणमनुवादः। तथा फलवदाग्नेयादिसन्निधावाम्नातानि प्रयाजाज्यभागानुयाज्यादीनि षण्णां यागानामङ्गभूतानि। एवं स्थिते 'दर्शपौर्णमासाभ्यां स्वर्गकामो यजेते'त्यस्यायमर्थः—दर्शपौर्णमासाभ्यां समुदायाभ्यां परस्परसहिताभ्यां स्वर्गापूर्वं कुर्यादिति। तत्र कथं कालद्वयवर्त्तिनोः समुदाययोः परस्परसाहित्यमित्याकाङ्क्षायां स्वरूपेण साहित्याभावेऽपि त्रिकात्त्रिका(३४)देकैकमपूर्वं जायते, तद्द्वारा द्वयोः समुदाययोः साहित्यमित्युच्यते। एकैकस्य (३५) त्रिकस्यापि त्रिकापूर्वजनकत्वं कथमित्याकाङ्क्षायां प्रयाजानुयागादिपूर्वोक्ताङ्गकलापविशिष्टस्यैकैकस्य त्रिकस्य समुदायापूर्वजनकत्वमुच्यते। एकैकस्य (३६) त्रिकस्य सर्वाङ्गसाहित्यं

---

(३३) अनुवादप्रयोजनमुक्त्वानुवादमाह—मानान्तरेणेति। पुनः श्रवणं मानान्तरप्राप्तार्थस्य वाचकशब्दस्य पुनः श्रवणमित्यर्थः। अर्थस्य श्रवणासम्भवात्। एतच्च गुरुत्वान्नानुवादलक्षणं केवलं मानान्तरप्राप्तार्थवाचकशब्दस्य यत्र श्रवणं तत्रानुवादोऽस्तीति प्रतिपादनार्थं लक्षणन्तु 'प्राप्तस्य पुनः कथनमनुवादः' इति वदे शब्दार्थत्वात्।

(३४) त्रिकात् त्रिकादिति। दर्शकर्त्तव्याग्नेयादित्रिकादेकं पौर्णमासीकर्त्तव्यत्रिकाच्चैकमपूर्व्वं जायते। ताभ्यामपूर्व्वाभ्यां सहिताभ्यां स्वर्गापूर्व्वं भावयेदित्यर्थः। ननु त्रिकात् कथमेकमपूर्व्वं जायते? परस्यानुष्ठानकाले पूर्व्वस्य क्षीयमानत्वात् इत्यतस्तदुपपादयति एकैकस्येति। त्रिकापूर्व्वजनकत्वं, त्रिकजन्यापूर्व्वजनकत्वं कथमिति परस्परसाहित्याभावादिति भावः। इत्याकाङ्क्षायामित्यनन्तरं एवमुच्यत इति अध्याहृतक्रिययान्वयः।

(३६) ननु साङ्गानामेव कर्म्मणां फलजनकत्वं वाच्यमथ तदेव न सम्भवति तेषां भिन्नत्वात् अत आदावङ्गसाहित्यमुपपाद्य कर्म्मणां साङ्गत्वं प्रतिपादयति एकैकस्येत्यादिना।

स्वरूपेण न सम्भवतीति त्रिभिर्यागैस्त्रीण्युत्पत्त्यपूर्वाणि जन्यन्ते, तद्द्वारा सर्वाङ्गसाहित्ये अङ्गानामपि प्रयाजादीनां स्वरूपेण प्रधानसाहित्याभावात्तत्तदुत्पत्त्यपूर्वद्वारा साहित्यं वाच्यम्। तथा च प्रधानजन्योत्पत्त्यपूर्वाणां प्रयाजादिजन्योत्पत्त्यपूर्वैः साहित्यं यदस्ति, तदेव प्रधानानामङ्गविशिष्टत्वरूपसाङ्गत्वम्। एवञ्च पौर्णमास्यामाग्नेयादिजन्यैस्त्रिभिरपूर्वैः प्रयाजादिजन्योत्पत्त्यपूर्वसचिवैः समुदायापूर्वमेकं जन्यते। तथा दर्शेऽपि आग्नेयेन्द्र-द्वयजन्यैस्त्रिभिरपूर्वैरङ्गोत्पत्त्यपूर्वसचिवैरेकं (२७) त्रिकापूर्वं जन्यते। ताभ्यान्त्रिकापूर्वाभ्यामाग्नेयाद्युत्पत्त्यपूर्वत्रितयत्रि-तयजन्याभ्यां फलजनकीभूतमहापूर्वं फलापूर्वनामकं जन्यते ततश्च फलमिति। तथा च सर्वाङ्गोपकृताभ्यां दर्शपौर्णमासा-भ्यामपूर्वद्वारा स्वर्गं कुर्य्यादिति फलापूर्वनिष्पत्तये साङ्गप्रधान-कर्त्तव्यताबोधको विधिः प्रयोगविधिरिति (२८) सिद्धम्।

पुनरपि विधिस्त्रिविधः। अपूर्वविधि(२९)र्नियमविधिः

---

(२७) सचिवैः उपकारकैः। अथवा प्रधानापूर्वसन्निधौ अङ्गापूर्व्वाणां सचिवत्वमेवेति :" सचिवैरित्युक्तं सन्निसृष्टैरित्यर्थः। समुदायापूर्व्वम् आग्नेयादित्रिक-समुदायजन्यापूर्व्वमित्यर्थः। त्रिकापूर्व्वाभ्यां त्रिकजन्यापूर्व्वाभ्यां। ते त्रित्वं विहणोति आग्नेयादीति।

(२८) प्रयोगविधिरिति। स च प्रायाजादिभिरुपकृत्य दर्शपौर्णमासाभ्यां यजते इत्येवं रूपः। पूर्व्वं विधायकवाक्यं ब्राह्मणमित्युक्तं तस्यैवापरं नाम विधिरिति तस्य पञ्चधाविभागमभिहितवान्। पुनस्त्रिधाविभागमाह—पुनरपीति।

(२९) अपूर्व्वविधिरिति। नास्ति पूर्व्वो यस्मादित्यपूर्व्वविधिरित्यर्थः।

परिसंख्याविधिश्चेति। तत्र यो विधिरत्यन्ताप्राप्तमर्थं (४०) प्रापयति सोऽपूर्वविधिः। यथा दर्शपौर्णमासप्रकरणे व्रीहीन् प्रोक्षतीति। एतद्विध्यभावे दर्शपौर्णमासीयव्रीहिषु प्रोक्षणं कथमपि न प्राप्नोति। एतद्‌विधिसत्त्वे तु तत्तत्सम्बन्धिव्रीहिषु प्रोक्षणं कथमपि प्राप्नोति। एतद्विधिसत्वे तु तत्तत् सम्बन्धिव्रीहीष प्रोक्षणं प्राप्नोत्येवेत्यन्ताप्राप्तप्रोक्षणप्रापकत्वादयमपूर्वविधिः।

यो विधिः पक्षे प्राप्तमर्थं नियमयति स नियमविधिः। यथा तत्रैव व्रीहीनवहन्तीति। एतद्विध्यभावे दर्शपौर्णमासिकेषु व्रीहिषूत्पत्तिवाक्यावनतपुरोडाशोपयोगि-तण्डुलनिष्पत्त्यनुकूलवैतुष्यकार्य्यायावहननवत्। कदाचिन्नखविदलनमपि प्राप्नुयादिति तस्मिन् पक्षेऽवहननस्य प्राप्तप्रभावात् कार्य्यान्यथोपपत्तेरवहननस्य पाक्षिकी प्राप्तिः स्यात्, सत्यस्मिन् विधौ अवहननेनैव वैतुष्यं कार्य्यमिति नियमे सति विदलनं सर्वात्मना निवर्त्तेत इति नियमविधिरयम्। न च वैतुष्यस्य नखविदलनेनापि सम्भवादवहननियमो व्यर्थः, प्रयोजनाभावादिति वाच्यम्। अवघातेनेव वैतुष्यकरणे किञ्चिददृष्टं जायत इति नियमादृष्टाङ्गीकारात्। नियमेन दृष्टकार्य्यलाभेऽप्यदृष्ट-

---

(४०) अत्यन्तेति। तथाचोक्तं—"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति तत्र चान्यत्र एव प्राप्तौ परिसंख्येति गीयते।" एतत् प्राचीनसम्वादमनुसृत्य तया रीत्या वैविध्यं प्रतिपादयति यथेति। पक्षे प्राप्तमर्थं व्रीहीनवहन्तीत्यादावहननादिरूपम्। नियमयति तदितरं व्यावर्त्त्य तदेवकर्त्तव्यत्वेनावधारयति। ननु "यस्य दृष्टं न लभ्येत तस्यादृष्टप्रकल्पन"मित्युक्तेः अवहननादेः वैतुष्यकरणरूपदृष्टप्रयोजने सति कथमदृष्टकल्पना सम्भवति इत्याह—नियमेनेति।

स्योत्पत्तेः (४२)। तच्चापूर्वं यागोत्पत्त्यपूर्वद्वारा फलापूर्वे उपयुज्यते। तेन नियमापूर्वाभावे फलापूर्वमेव नोत्पद्येत इति कल्पनान्नियमापूर्वस्य न वैयर्थ्यम्। एवं व्रीहिसोमादिद्रव्य-नियमविधिषु बोध्यम्।

'द्वयोः (४३) समुच्चित्य प्राप्तावितरनिवृत्तिफलको विधिः परिसङ्ख्याविधिः।' यथा (४४) चयनप्रकरणे—'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यश्वरशनाग्रहणाङ्गत्वेन मन्त्रविधिः। एतद्विध्यभावे हि रशनाग्रहणप्रकाशको मन्त्रो-रशनादानप्रकाशनसामर्थ्यरूपाल्लिङ्गादश्वरशनादाने इव गर्दभ-

---

(४२) अदृष्टस्योत्पत्तेरिति। अदृष्टोत्पत्त्यभावे नियमासम्भवादिति भावः। यथाह श्रीकृष्णः—"अदृष्टजनककर्म्मण्येव करणाकरणयोः शुभाशुभादृष्टमात्रार्थो नियमः" इति।

(४३) परिसंख्याविधिमाह द्वयोरिति। समुच्चित्यप्राप्तौ तद्विध्यभावे अविशेषेणो-भयप्राप्तौ विधिप्राप्तेतरनिवृत्तिफलको विधिः परिसंख्याविधिरित्यर्थः। नियमपरिसंख्ययो-र्विषयभेदोऽप्ययमेव। नियमे विधिप्राप्तावहननस्य पाक्षिकी प्राप्तिः। अर्थात् यत्र वैतुष्यकरणार्थं नखदलनमवलम्बते तत्रावहननस्य न प्राप्तिः, पुरुषाभिप्रायस्य वैचित्र्यात्; यदा वैतुष्यार्थमवहननमेवावलम्बते तदा तस्य प्राप्तिरिति पाक्षिक्यां प्राप्तौ नियमः। परिसंख्याविषये तु अश्वाभिधानीमादत्त इत्यादौ एतद्विध्यभावे रशनादानप्रकाशनसामर्थ्य-रूपाल्लिङ्गात् अश्वरसनागर्द्दभरसनयोरुभयोरेव समुच्चयेनादानप्राप्तौ परिसंख्याविधिरिति। न च यदा केषाञ्चिदवघातेन केषाञ्चिन्नखदलनेनापि वैतुष्यं क्रियते तदा नियमस्थलेऽपि द्वयोः समुच्चित्यप्राप्तौ परिसंख्याविधिरास्तामिति वाच्यं विधिना समुच्चित्य द्वयोः प्राप्तौ परिसंख्याविध्यङ्गीकारात्, अत्र तु विधिनावहननस्यैव प्राप्तेर्नैतदवसर इति।

(४४) परिसंख्योदाहरणमाह यथेति। इमामित्यादिमन्त्रस्तु परत्र व्याख्यास्यते।

रशनादानेऽपि नियमेन प्राप्नुयात्। सत्यस्मिन् विधौ अनेन मन्त्रेणाश्वरशनामेवाददीत न तु गर्दभरशनां सा तु तूष्णीमेव आदेयेति गर्दभरशनायां मन्त्रनिवृत्तिर्भवतीति द्वयोः समुच्चित्य प्राप्तावितरनिवृत्तिफलकत्वादयं परिसङ्ख्याविधिः।

पूर्वं दर्शपौर्णमासाङ्गत्वं प्रयाजादीनामुक्तम्। तत्राङ्गत्व-बोधकप्रमाणानि (४५) श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्याभेदेन षट्। तत्र दध्ना जुहोयादित्यत्राग्निहोत्र-वाक्यप्राप्तं होमं जुहोतीत्यनेनोद्दिश्य तत्करणत्वेन तृतीया-श्रुत्या दधि विधीयत इति श्रुत्या दध्नोऽङ्गत्वम् (४६)। लिङ्गं नाम सामर्थ्यम् (४७)। तच्च द्विविधम्—अर्थगतं शब्दगतञ्चेति। आद्यं यथा—स्रुवेण(४८)वद्यतीत्यवदान-

---

(४५) ननु प्रयाजादीनां दर्शपौर्णमासाङ्गत्वमुक्तं तेषामङ्गत्वे किं प्रमाणमित्याकाङ्क्षायां अङ्गत्वबोधकप्रमाणानि श्रुत्यादीनि सोदाहरणानि निरूपयति तत्रेति।

(४६) ननु श्रुतेर्नाम केवलमुदाहरणं दर्शितं तत्र का श्रुतिः कथं वा प्रधानप्रमाणं तामनिरूप्य लिङ्गादीनि निरूप्यन्ते। अत्रोच्यते; लिङ्गादीनि पृथ निरूपयिष्यन्ते। तेभ्योऽन्यथा यथा विनियोगोऽवगम्यते। सा श्रुतिः कारकविभक्तिरूपा तस्या विनियोजकत्वादिति हृदयम्। यद्वा तृतीयाश्रुत्येत्यत्र तृतीयायाः श्रुत्या भेदोक्त्या तृतीया श्रुतिरिति प्रतिपादितम्। द्वितीयादेरपि यथास्थानमुदाहरणदर्शने द्वितीयाश्रुत्यादिना श्रुतित्वप्रतिपादनान्न पृथक् लक्षणमभिहितमिति। यद्वा श्रुतिर्हि स्वतो विनियोजिकेति वक्ष्यते। तेन स्वतोऽन्यमनपेक्ष्य विनियोजिका श्रुतिरिति ब्रुवता अन्यानपेक्षविनियोजकत्वं श्रुतित्वमिति लक्षणमप्यभिहितमेवेति।

(४७) लिङ्गं निरूपयति लिङ्गमिति। सामर्थ्यम् अर्थगतसन्वययोग्यताविशेषः।

(४८) आद्यो उदाहरणमाह स्रुवेणेति। अत्रायमाशयः—स्रुवेणावद्यति

सामान्यशेषत्वावगमेऽपि स्रुवस्य सामर्थ्यं रूपाल्लिङ्गादाज्यसान्नाय्यादिद्रवद्रव्यस्यावदानविशेषाङ्गत्वं स्रुवेण पुरोडाशाद्यवदानस्य कर्त्तुमशक्यत्वात्। शब्दगतं तु लिङ्गमर्थप्रकाशनसामर्थ्यम्। यथा अग्नये जुष्टं (४९) निर्वपामीतिमन्त्रस्य (५०) निर्वापप्रकाशनसामर्थ्यं रूपाल्लिङ्गान्निर्वापाङ्गत्वम्। यस्य मन्त्रस्य यत्प्रकाशनसामर्थ्यं तस्य तदङ्गत्वम्। पदान्तर—(५१) समभिव्याहारो वाक्यम्। यथा इषेत्वेति (५२) छिनत्तीति। अत्र छेदनाङ्गत्वेन इषेत्वेतिमन्त्रो वाक्येन विधीयते। यद्वा

---

स्वधेति मावद्यति हस्तेनावद्यतीति सामान्यतः श्रूयते। अवत्तु वस्वधितिहस्तानां मासामान्यतोऽवदानाङ्गत्वे प्राप्ते अवदेयाज्यमांसपुरोडाशादिहविःषु आज्यावदान एव स्रुवस्य पुष्टुकारणत्वेनान्वययोग्यतया अर्थगतलिङ्गात् आज्यावदानङ्गत्वं स्रुवस्य। एवं स्वधेति हस्तयोर्यथाक्रमं मांसपुरोडाशाङ्गत्वमिति। शेषत्वावगमेऽपि अङ्गत्वावगमेऽपीत्यर्थः। सान्नाय्यं हविर्विशेषः। 'सान्नाय्यनिकाय्यौ हविर्निवासयो'रिति सूत्रे च हविषि निपातनात्।

(४९) द्वितीये उदाहरणमाह अग्नये जुष्टमिति। निर्व्वापाङ्गत्वमिति न प्रधानयागाङ्गत्वमिति भावः।

(५०) ननु निर्व्वापस्य प्रधानयागाङ्गत्वात्तदीयमन्त्रस्यापि प्रधानयागाङ्गत्वमस्त्वित्यतस्तन्निरस्यति यस्य मन्त्रस्येति।

(५१) वाक्यं लक्षयति पदान्तरेति। शेषिवाचकपदान्तरेण शेषवाचकपदस्य शेषवाचकपदान्तरेण शेषिवाचकपदस्य वा समभिव्याहारोच्चारणमर्थात् शेषशेषिवाचकपदयोः सहोच्चारणं वाक्यमित्यर्थः।

(५२) उदाहरणमाह इषेत्वेति। ननु दध्ना जुहोतीतिवत् इषेत्वेतीति शब्दोत्तरवर्त्तिन्या तृतीयया श्रुत्या इषेत्वेति मन्त्रस्य छेदनाङ्गत्वं प्राप्तमेव तत् कथं वाक्यस्योदाहरणं सम्भवतीत्याह यद्वेति।

अग्नये जुष्टमित्यत्रैव (५३) अग्नये जुष्टमित्यादिपदानां निर्वापामीत्यनेनैकवाक्यतापन्नत्वान्निर्वापाङ्गत्वम्। प्रकरणं (५४) नाम परस्पराकाङ्क्षा। यथा दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेति। अत्र दर्शपौर्णमासाभ्यां स्वर्गापूर्वं कुर्य्यादित्युक्ते भवत्याकाङ्क्षा कथमाभ्यां स्वर्गापूर्वं कर्त्तव्यमिति। तथा फलवदाग्नेयादिसन्निधौ समिधो यजति तनूनपातं यजति आज्यभागौ यजतीत्यादिभिः प्रयाजादयः फलरहिताः श्रुतास्तेषां स्ववाक्येषु फलाश्रवणात् भवति प्रयोजनकाङ्क्षा—किमेतेषां प्रयोजनमिति। ततश्च प्रयाजादीनां प्रयोजनाकाङ्क्षायां दर्शपौर्णमासयोश्च कथम्भवाकाङ्क्षायां परस्पराकाङ्क्षालक्षणेन प्रकरणेन प्रयाजादीनां सर्व्वेषां दर्शपौर्णमासाङ्गत्वं निर्णीयते।

स्थानं नाम सन्निधिः (५५)। यथा सान्नाय्यपात्रसन्निधौ

---

(५३) अग्नये जुष्टमिति। यद्यप्यत्रापि लिङ्गान्निर्वापाङ्गत्वं पूर्व्वमभिहितं तथापि निर्वपामीत्यनेनैकवाक्यताविरहे तन्न सम्भवतीत्यतो वाक्यमपि प्रमाणम्। अतएव अग्नये जुष्टमित्यत्रैवेत्येवकारेण निर्द्दिष्टम्। तेन अग्नये जुष्टमित्यत्र यथा लिङ्गमङ्गत्वे प्रमाणं तथा अग्नये जुष्टमित्यत्रैव वाक्यं प्रमाणमित्यर्थः।

(५४) प्रकरणं लक्षयति प्रकरणमिति। ननु यद्युभयाकाङ्क्षा प्रकरणं। तदा येष्वङ्गवाक्येषु फलं श्रूयते यथा जन्माष्टमीव्रतादौ पूजनादीनां तेषां तदङ्गत्वं प्रकरणात् कथं भवति? फलवत्त्वेनाङ्गानां प्रयोजनाकाङ्क्षाविरहादिति चेत्? नैवं तत्रापि तत्तदङ्गविशिष्टप्रधानस्यैव तत्फलजनकत्वमन्यथा प्रधानाभावे तत्तदङ्गानुष्ठानेऽपि तत् फलं स्यादिति।

(५५) स्थानमाह स्थानमिति। ननु स्थानात् सान्नाय्यपात्रप्रोक्षणाङ्गत्वं कुतो

शुन्धध्वमितिमन्त्रस्य पाठात् सन्निधानात् सान्नाय्यपात्रप्रोक्षणाङ्गत्वम्। समाख्या संज्ञा (५६)। यथा आध्वर्य्यवकाण्डप्रतिपादिते कर्म्मजाते आध्वर्य्यवसमाख्यावशादध्वर्य्योः कर्तृत्वेनाङ्गत्वम्। तथा 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इत्यादिषु काम्येष्टिसमाख्यातेषु ऐन्द्राग्नादियागेषु काम्येष्टियाज्यानुवाक्याकाण्डसमाख्यावशादुभावामिन्द्राग्नी इत्यादीनां याज्यानुवाक्यत्वेन विनियोगः। विनियोगो नामाङ्गत्वेनान्वयः।

---

लभ्यते ? तत्पात्रग्रहणेऽपि मन्त्रस्याङ्गत्वं सम्भवति सत्यं शुन्धध्वमित्यस्य 'शुन्ध शुद्धौ' इत्यस्मान्निष्पन्नत्वेन शोधकत्वावगमात् क्रियां विना केवलमन्त्रपाठस्य द्रव्यग्रहणस्य चान्यत्र शोधकत्वाश्रवणात् प्रोक्षणस्य तु व्रीहीन् प्रोक्षतिना प्रोक्षितं भुञ्जीतेत्यादौ द्रव्यशोधकत्वावगमात् प्रोक्षणस्यैवाङ्गत्वं मन्त्रस्य निर्णीयते।

(५६) समाख्यां निरूपयति समाख्येति। संज्ञाचावयवशक्तिलभ्या तस्मान्नाधुनिकदेवदत्तादिसंज्ञानां परिग्रहः। यौगिकत्वं समाख्येति प्राचीनसंवादादपि न भिद्यते। लिङ्गञ्च शब्दगतमर्थप्रकाशनसामर्थ्यं रूढ्या वेदितव्यमित्यतस्समाख्यातो भिद्यत इति। उदाहरणमाह यथेति काण्डशब्दोऽत्र प्रकरणविशेषवाचकः। नन्वाध्वर्य्यवसमाख्यावशादध्वर्य्योः कथं कर्तृत्वेनाङ्गत्वं कर्तृत्ववाचकशब्दाभावात्, मैवं अध्वर्य्योरिदं कर्म्मजातमाध्वर्य्यवमिति अध्वर्य्युसम्बन्धिकर्म्मसमूह इत्यर्थः। सम्बन्धः कर्तृत्वरूपः कर्म्मसु अध्वर्य्योरन्यान्यसम्बन्धासम्भवादिति। उदाहरणान्तरमाह तथेति। काम्येष्टीति काम्येष्टिसमाख्यातेष्वित्यर्थः। काम्येष्टि याज्येति काम्येष्टीनां याज्यानुवाक्याकाण्डे याज्यानुवाक्ययोः समाख्याकृता तत्समाख्यावशादित्यर्थः। याज्यानुवाक्ययोर्लक्षणं निरुक्तेपि 'पुरस्ताल्लक्षणा पुरोनुवाक्या भवति उपरिष्टाल्लक्षणायाज्यामन्त्रप्रतिपाद्याया देवताया नामधेयं लक्षणं', तत् यस्यामृचि पूर्व्वार्द्धे वर्त्तते सा पुरोनुवाक्या यथा अग्निर्मूर्द्धेति ऋक् यस्यामृचि उत्तरार्द्धे विद्यते सा याज्या यथा जिह्वामग्ने च कृषे। एवं स्थिते उभावामिन्द्राग्नीति ऋक् वा याज्या उपविष्टाद्देवतानामश्रवणात् एवमित्यादीनां तद्यागीयानां याज्यानुवाक्या

श्रुत्यादीनामेकत्र (५७) समावेशे पूर्व्वपूर्व्वस्य प्राबल्यम्, उत्तरोत्तरस्य दौर्बल्यम्। यथा 'कदाचन(५८)स्तरीरसीत्यैन्द्रया गार्हपत्यमुपतिष्ठते' इत्यग्निहोत्रप्रकरणे श्रूयते। तत्र मन्त्रस्य इन्द्रप्रकाशनसामर्थ्यरूपाल्लिङ्गादिन्द्रोपस्थानाङ्गत्वे प्राप्ते ऐन्द्रयति तृतीयाश्रुत्या गार्हपत्यमिति द्वितीयाश्रुत्या च गार्हपत्योपस्थानाङ्गत्वेन विधानाल्लैङ्गिक इन्द्रोपस्थाने विनियोगो बाध्यते(५९)। श्रुतिर्हि स्वतो विनियोजिका, लिङ्गन्त्विन्द्रप्रकाशनसामर्थ्यमालोच्य ऐन्द्रेयेन्द्रमुपतिष्ठते इति श्रुतिकल्पनाद्वारा विनियोजकमिति वाच्यम्, तच्चात्र न सम्भवति। यत्र श्रुतिविनियोगो

---

पुरोदेवतानाम वर्त्तते तासां परिग्रहः। तेन उभावामिन्द्राग्नीत्यस्याथाज्यात्वेन भादिना परिगृहीतानामनुवाक्यात्वेन विनियोग इत्यर्थः।

(५७) श्रुत्यादीनामिति बहुवचनमतन्त्रं तेन द्वयोरप्येकत्रसमावेशे पारदौर्बल्यं। समावेशे विरुद्धत्वेनेति शेषः। तेन अग्नये जुष्टं निर्व्वपामीत्यादौ लिङ्गात् वाक्याच्च निर्व्वापाङ्गत्वे प्रतिपादिते न प्राबल्यदौर्बल्यविवेचनमिति। उत्तरोत्तरस्य दौर्बल्यमिति। 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षा' दिति जैमिनिसूत्रादिति भावः।

(५८) कदाचनेति। समुदायमन्त्रस्तु 'कदाच नस्तरीरसि नेन्द्र सश्चसि दाशुषे। हे इन्द्र कदाच कदापि नोऽस्माकं न तरीरसि न हन्तासि किन्तु दाशुषे आहुतिं ददते सश्चसि प्रीणासीत्यर्थः।

(५९) विनियोगो बाध्यत इति। ननु श्रुत्या बलवत्या लैङ्गिकविनियोगो बाध्यतां श्रुतिमन्त्रयोर्विरोधः कथं परिहरणीयः? तथा च 'गार्हपत्यमुपतिष्ठते' इति श्रुत्या गार्हपत्योपस्थानप्रतीतौ मन्त्रेण तदनुकूलैव स्तुतिः कार्य्या अन्यथा मन्त्रस्य स्वकरणककर्म्मस्मारकत्वमपि न स्यात्। सत्यं विधिवाक्यस्थगार्हपत्योपस्थानानुपपत्त्या मन्त्रे

नास्ति अग्नये जुष्टं निर्वपामीत्यादौ, तत्र मन्त्रस्य निर्वाप-प्रकाशनसामर्थ्यमालोच्य 'अनेन मन्त्रेण निर्वापं कुर्य्यादिति' श्रुतिकल्पनाद्वारा लिङ्गं विनियोजकं भवत्येव, श्रुतिकल्पना-प्रतिबन्धकाभावात्। तथा स्योनन्ते (६०) सदनं कृणोमि तस्मिन् सीदेत्यत्र तस्मिन्निति तच्छब्दस्य पूर्ववाक्यार्थसापेक्षतया एकवाक्यत्वभानाद्वाक्यप्रमाणेन द्वयोरेकमन्त्रत्वं भाति। लिङ्गेन तु भिन्नमन्त्रत्वं भाति, आद्यस्य सदनप्रकाशक-त्वात्। तस्मिन् सीदेत्यस्य सादनप्रकाशकत्वात् तत्र वाक्या-पेक्षया लिङ्गस्य प्राबल्याद्वाक्यं बाधित्वा लिङ्गेन स्योनन्त इत्यस्य सदनाङ्गत्वम्, तस्मिन् सीदेत्यस्य सादनाङ्गत्वमिति निर्णयः। स्योनन्त इत्यस्य तस्मिन् सीदेत्यनेनैकवाक्यत्वबलाद्यथाकथञ्चित् सादनसामर्थ्यरूपं लिङ्गं कल्पयित्वा अनेन विशिष्टमन्त्रेण सादनं कुर्य्यादिति श्रुतिः कल्पनीया। सदनप्रकाशनरूपप्रत्यक्ष-लिङ्गेन कल्पितया स्योनन्त इत्यनेन सदनं कुर्य्यादिति श्रुत्या-

---

इन्द्रपदस्य गार्हपत्ये लक्षणा वाक्यावधृततदङ्गत्वपरत्वानुपपत्त्या धान्यमसीति मन्त्रे तण्डुललक्षणावत्। उक्तञ्च शास्त्रदीपिकायां 'यावदेव हि मन्त्रार्थो मन्त्रेण प्रतिपाद्यते। तावदेव श्रुतिर्मन्त्रं गार्हपत्यार्थतां नयेत्।' इत्यादि।

(६०) स्योनन्त इति। समुदायमन्त्रस्तु 'स्योनन्ते सदनं कृणोमि घृतस्य धारया सुषेवं कल्पयामि तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः।' अस्यार्थः भो पुरोडाश ते तव स्योनसुत्तमं सदनं स्थानं कृणोमि करोमि तच्च स्थानं घृतस्य धारया सुषेवं सुखसेव्यं कल्पयामि। हे व्रीहीणां मेधसारभूत त्वं सुमनस्य मानः समाहितमनास्तस्मिन् सुखकरत्वादमृते सदने सीद उपविश्य प्रतितिष्ठ स्थिरोभव।

स्योनन्त इत्यस्य शेषं सदने विनियोगे सति तेनैव मन्त्रस्य नैराकाङ्क्षाद्वाक्यप्रमाणात् लिङ्गं कल्पयित्वा श्रुतिकल्पना प्रतिवध्यते विलम्बितत्वादिति (६१) लिङ्गेन वाक्यस्य बाधः। एवं वाक्येन प्रकरणस्य, प्रकरणेन क्रमस्य, क्रमेण समाख्याया बाधो वेदितव्यः। तथा श्रुत्या वाक्यादेरपि बाधः। तदेवमङ्गताबोधकप्रमाणानि श्रुत्यादीनि निरूपितानि।

तच्चाङ्गत्वं (६२) शेषत्वं पारार्थ्यमिति यावत्। परोद्देशेन प्रवृत्तकृतिव्याप्यत्वं पारार्थ्यम्। प्रयाजादीनां दर्शपौर्णमासोद्देशेन प्रवृत्तकृतिव्याप्यत्वात् लक्षणसङ्गतिः, दर्शादेः प्रयाजाद्युद्देशेन प्रवृत्तकृतिविषयत्वाभावान्नातिव्याप्तिः, केवलप्रयाजादीनुद्दिश्य कस्यचिदपि पुरुषस्याप्रवृत्तेः। तान्यङ्गानि (६३) द्विविधानि सन्निपत्योपकारकाणि आरादुपकारकाणि

---

(६१) विलम्बितत्वादिति। भादौ तस्मिन् सीदामृत इत्यस्यान्वयबोधस्तदनन्तं पूर्व्वापरभागयोरेकवाक्यतावगमस्तदुत्तरमर्थप्रकाशनसामर्थ्यरूपलिङ्गात्। समग्रमन्त्रस्य प्रत्येककर्म्मणि विनियोजिकाः श्रुतिः कल्प्या। यावताकालेनेयं कल्पना सम्पत्स्यते तावता प्रत्यक्षलिङ्गद्वयेन पूर्व्वापराङ्गविभागेन विनियोजिका श्रुतिः कल्पिता स्यात् कल्पिता च सा वाक्यात् लिङ्गकल्पनातः श्रुतिकल्पनां प्रतिबध्नातीत्यर्थः।

(६२) निरूपितेष्वङ्गताबोधकप्रमाणेषु किमङ्गमित्याकाङ्क्षायामङ्गं निरूपयति-तच्चेति। पारार्थ्यमाह परोद्देशेनेति। परोद्देशेन प्रधानकर्म्मण उपकारोद्देशेन प्रवृत्तस्य पुरुषस्य कृतिव्याप्यत्वं कृतिसाध्यत्वमित्यर्थः। उदाहरणमाह प्रयाजादीनामिति। दर्शादौ प्रधानकर्म्मणि लक्षणस्यागतिं दर्शयति दर्शादेरिति।

(६३) निरूपिताङ्गानि द्विधा विभजते तानीति। सन्निपात्योपकारकाण्याह यान्यङ्ग-

चेति। यान्यङ्गानि साक्षात् परम्परया वा प्रधानयागशरीरं निष्पाद्य तद्द्वारा तदुत्पत्त्यपूर्व्वोपयोगीनि, तानि सन्निपत्योपकारकाणि। यथा व्रीह्यादिद्रव्याणि, तत्संयुक्तावहनन-प्रोक्षणादीनि अग्न्यादिदेवता, तत् संयुक्तयाज्यानुवाक्यानु-वचनादीनि च। अत्र प्रोक्षणादेर्व्रीहिगतातिशयद्वारा अवहननादेस्तुषविमोकादिरूपदृष्टद्वारा व्रीह्यादीनां पिष्टद्वारा पुरोडाशनिष्पादकत्वं तद्द्वारा यागशरीरतदुत्पत्त्यपूर्वहेतुत्वञ्च। याज्यानुवाक्यादेर्दैवतासंस्कारद्वारा देवतायाश्च साक्षाद्-यागशरीरनिर्वर्त्तकत्वं तद्द्वारा तदुत्पत्त्यपूर्व्वोपयोगित्वञ्च। यागस्य देवतोद्देशेन द्रव्यत्यागरूपत्वात्, द्रव्यदेवते हि याग-स्वरूपमिति सिद्धान्ताच्च। एतान्येव समवायिकारणानी-त्युच्यन्ते। आत्मसमवेतापूर्व्वजनकान्यारादुपकारकाणि (६४)। यथा प्रजायाज्यभागानुयाजादीनि। एतानि द्रव्यगतं देवतागतं वा संस्कारं न जनयन्ति किन्त्वात्मगतमदृष्टं जनयन्तीत्यारादुप-कारकाणि।

---

नीति। प्रधानयागशरीरं पुरोडाशादिकम्। व्रीहिभिः पुरोडाशं कृत्वा यजतेत्यादौ तस्यागस्यैव यागत्वात्। तद्द्वारा पुरोडाशद्वारा। तदुत्पत्त्यपूर्व्वोपयोगीनि प्रधान-जन्योत्पत्त्यपूर्व्वसम्पादकानीत्यर्थः। उदाहरणमाह यथेति अमीषां साक्षात् परम्परया च यागशरीरनिष्पादकत्वं दर्शयति अत्रेति। अतिशयद्वारा संस्कारद्वारा (अपूर्व्वद्वारा)। एतान्येव सन्निपात्योपकारकान्येव।

(६४) आरादुपकारकाण्याह आत्मेति।

तच्च (६५) सामान्यतः कर्म्म द्विविधम्—अर्थकर्म्म गुणकर्म्म चेति। तत्रात्मगतापूर्व्वजनकं कर्म्मार्थकर्म्म। यथा अग्निहोत्र-दर्शपौर्णमासप्रयाजादिकम्। गुणकर्म्म (६६) संस्कारजनकम्। तच्च द्विविधम्—उपयुक्तसंस्कारकमुपयोक्ष्यमाणसंस्कारकञ्चेति (६७)। तत्र उपयुक्तसंस्कारकं प्रतिपत्तिकर्म्म। उपयुक्तस्य आकीर्णकरस्य द्रव्यस्य विहितदेशे प्रक्षेपः प्रतिपत्तिरिति प्रतिपत्तिलक्षणात्। यथा इड़ाभक्षणकृष्णविषाणप्रासन-चतुरवत्तहोमादिकम्। नन्विड़ा-

---

(६५) प्रसङ्गतोऽङ्गीनां यथाकथञ्चिद्विभागमुक्ता विशेषतो विभक्तुम् आदौ सामान्यकर्म्म विभजते तच्चेति।

(६६) गुणकर्म्मापि द्विधाविभजते गुणेति। तच्चेति उपयुक्तस्य द्रव्यस्य संस्कारकं द्रव्यगतातिशयजनकमित्यर्थः। प्रतिपत्तिकर्म्मेति प्रतिपत्तेरुपयुक्तद्रव्यस्य विहितदेशप्रक्षेपरूपत्वात् तादृशप्रक्षेपेण चोपयुक्तस्य संस्कारजनकत्वादनयोरभेद इति भावः। प्रतिपत्तिलक्षणमाह उपयुक्तस्येति। आकीर्णेति एतस्य लक्षणमाह शास्त्रदीपिकायां यथा 'कृतार्थमपि तु द्रव्यमाकीर्णकरमुच्यते।' कृतोऽर्थः योजनं येन तत् द्रव्यमाकीर्णकरमित्यर्थः। अपिना कर्त्तुं योग्यस्य द्रव्यस्य समुच्चयः। प्रतिपत्तिलक्षणादिति। यत उपयुक्तद्रव्यस्य विहितदेशे प्रक्षेपः प्रतिपत्तिरिति प्रतिपत्तिलक्षणं, तस्मात् उपयुक्तसंस्कारकं प्रतिपत्तिकर्म्म तादृशप्रक्षेपस्य संस्कारजनकत्वादिति हृदयम्। उदाहरणमाह यथेति। इड़ा पुरोडाशखण्डः। होमस्येति यागसमानकालीनत्वं परत्र व्यक्तीभविष्यति तदेव प्रधानयागोपयुक्तत्वाभावे हेतुः। अयमाशयः; यस्मात् होमः प्रधानयागसमकाल एव ऋत्विगन्तरेणानुष्ठेयः अतो होमीयद्रव्यस्य चतुरवत्तत्वादिनं प्रधानयागे उपयोग इति।

(६७) उपयुक्तेति। अत्रायमाशयः, कृतो युग्यतायां शक्तेः उपयुक्तस्य उपयोग-

भक्षणस्य प्रधानयागोपयुक्ताकीर्णकरपुरोडाशद्रव्यप्रक्षेपात्मकत्वात् प्रतिपत्तित्वं युक्तम्, होमस्य तु यागोपयुक्तद्रव्यसंस्कारकत्वाभावात् कथं प्रतिपत्तित्वम्? होमस्य यागसमानकालीनत्वेन होमसंस्कार्य्यस्य चतुरवत्तादेरुपयुक्तत्वाभावादिति चेदत्राहुः। उपयुक्तसंस्कारमात्रं प्रतिपत्तिः, न तु प्रधानयागोपयुक्तत्वं विवक्षितम्। तथा सति पशोर्विशसनानन्तरं वपाहृदयाद्युद्धरणकालकर्त्तव्यस्य लोहितशकृन्निरसनस्य प्रतिपत्तित्वाभावप्रसङ्गात्, यागोपयुक्तद्रव्यप्रक्षेपरूपत्वाभावात्। तथा कृष्णविषाणप्रासनस्यापि प्रतिपत्तित्वं न स्यात्। यागाङ्गभूतकण्डूयनोपयुक्तत्वेऽपि (६८) यागोपयुक्तत्वाभावात्। अतो यत्र क्वचनोपयोगमात्रं विवक्षितम्, यत्र क्वचिदुपयोगस्तत्राप्यस्ति, वपाहृदयाद्युद्धरणेनोपयुक्तस्य पशोः सम्बन्धिनः शकृल्लोहितस्याकीर्णकरस्य प्रतिपत्त्यपेक्षत्वात्।

---

योग्यस्येत्यर्थः। संस्कारमात्रं संस्कारकमात्रमित्यर्थः। उपयुक्तस्य संस्कारमात्रं यस्मादिति बहुव्रीहिणा तदर्थलाभात् अन्यथा उपयुक्तसंस्कारकं प्रतिपत्तिकर्म्मेति। पूर्व्वोक्तेन विरोधो घटते। संस्कारशब्देनाच युज्यिरुच्यते लोहितसकृन्निरसनादेरन्यरूपासम्भवात्। तत्विति प्रधानयागोपयुक्तत्वं साक्षात्प्रधानयागसम्पादकत्वं विवक्षितं न त्वित्यर्थः।

(६८) यागाङ्गभूतकण्डूयनेति। ज्योतिष्टोमे कृष्णविषाणया कण्डूयति नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यतीति श्रूयते। अयमर्थः यजमानेन दत्ता दक्षिणा र्त्विग्भिर्यदानीतास्तदा यजमानः स्वहस्ते धृतं शिरःकण्डूयने उपयुक्तं कृष्णमृगस्य शृङ्गं चात्वालनामके गर्त्ते प्रक्षिपेत एवं स्थिते यागाङ्गभूतकण्डूयनोपयुक्तत्वेऽपि साक्षात्प्रधानयागोपयुक्तत्वाभात् कृष्णविषाणप्रासनस्यापि प्रतिपत्तित्वं न स्यादिति पूर्व्वेण सम्बन्धः।

एवं (६९) यथा कथञ्चिदुपयोगो होमस्थलेऽप्यस्ति। तथाहि—प्रतिपत्तिस्त्रिविधा; प्रधानोत्तरकाला, प्रधानसमकाला, प्रधानपूर्व्वकाला चेति। तत्राद्या इडाभक्षणादिका। द्वितीया होमादिका तथाहि—दर्शपौर्णमासप्रकरणे श्रूयते। 'सकृदुपस्तृणाति' 'द्विर्हविषोऽवद्यति' 'सकृदभिघारयति' 'चतुरवत्तं जुहोतीति' (७०)। तत्र चतुरवत्तवाक्ये होमानुवादेन चतुरवत्तद्रव्यं तत्साधनत्वेन न विधीयते, होमस्य अप्राप्तत्वेनानुवादासम्भवात्। न च यदाग्नेय इति वाक्यात् होमप्राप्तिः। तद्वाक्यस्य यागविधायकत्वेन होमविधायकत्वाभावात्। न च यागहोमयोरभेद इति वाच्यम्। देवतोद्देशेन द्रव्यत्यागस्य यागशब्दार्थत्वात्, प्रक्षेपविशिष्टस्य यागस्य होम-

---

अतो न साक्षात् यागोपयुक्तत्वं विवक्षितमिति भावः। तदेव स्पष्टयति अत इति यत्र क्वचन यत्र कुत्रचिदुपयोगमात्रं विवक्षितं नतु प्रधानयागेऽपीत्यर्थः। यत्रेति यत्र क्वचित् कुत्रचिदुपयोगस्तत्रापि लोहितसक्तुन्निरसनेप्यस्तीत्यर्थः।

(६९) होमस्थलेऽपि परम्परोपयोगं दर्शयति एवमिति। प्रधानेति प्रधानोत्तरकालो यस्या एवमपरयोरपि विग्रहः। दृष्टान्तमाह तत्रेति, इडाभक्षणस्य प्रधानोत्तरं विहितत्वादिति भावः।

(७०) चतुरवत्तमिति। सकृदुपस्तरणं द्विरवदानं सकृदभिघारणमिति मिलित्वा चतुरत्वमित्यर्थः। चतुरवत्तवाक्ये चतुरवत्तं जुहोतीतिवाक्ये। नन्वाग्नेयवाक्येन प्रक्षेपविशिष्टस्य यागस्य होमरूपस्यापि यागत्वेन विधीयमानत्वात् कथं नानुवाद इत्याह तत्रेति। आग्नेयचोदनया आग्नेयपदघटितयदाग्नेय इत्यादिविधिना यागस्य प्राप्तत्वेऽपि यागत्वेन विधानादिति भावः। प्रक्षेपांशस्य होमघटकीभूतप्रक्षेपांशस्य।

शब्दार्थत्वात्। तत्राग्नेयचोदनया यागस्य प्राप्तत्वेऽपि प्रक्षेपांशस्याप्राप्तत्वेनानुवादासम्भवात्। किन्तु पस्तरणद्विरवदानाभिधारणवाक्यैः प्राप्तं चतुरवत्तमुद्दिश्य तत्संस्कारत्वेन प्रक्षेपो जुहोतीत्यनेन (७१) विधीयते। स च संस्कारः प्रतिपत्तिरूप एव। अग्नये जुष्टमभिधारयामीत्यादिनिर्देशैर्यागाङ्गभूताग्न्यादिदेवतार्थतया यथाकथञ्चिदुपयुक्तस्य पुरोडाशस्य प्रतिपत्त्यपेक्षतया तदवयवद्व्यवदान- (७२) कर्म्मकप्रक्षेपस्य प्रतिपत्तिकर्म्मत्वौचित्यात्। स च संस्कारप्रधानसमकालः। होमो हि वषट्कृते जुहोतीति विधानात् वषट्कारोत्तरक्षणे अध्वर्य्युणा कर्त्तव्यः, यागोऽपि तस्मिन्नेव क्षणे यागस्य स्मरणा-

---

(७१) जुहोतीत्यनेनेति। ननु जुहोतीत्यनेन होम एव विधीयते कथं प्रक्षेपो विधीयत इत्युक्तं? नैवं यागस्य प्राप्तत्वेन तदंशे विधित्वासम्भवात् प्रक्षेपविशिष्टयागात्मकस्य होमस्य प्रक्षेप एवाप्राप्तभागोविशिष्यते। अतो दग्धदहनन्यायेन स एव प्रक्षेपो विधीयत इति।

(७२) तदवयवद्व्यवदानेति। पुरोडाशावयवभूतं यत् द्व्यवदानं तत्कर्म्मकप्रक्षेपस्येत्यर्थः। अत्रावदानशब्दः 'कृदभिहितो भावो द्रव्यवत् प्रकाशत' इति न्यायात् अङ्गुष्ठपर्व्वात्मकावदेयभागपरं। तदुक्तं माधवाचार्य्यैः—'द्विर्हविषोऽवद्यतीत्यवदानद्वयं श्रूयते। अवदेयञ्च अङ्गुष्ठपर्व्वमात्रं।' तथाच कल्पसूत्रम् 'आग्नेयस्य पुरोडाशस्य मध्यादङ्गुष्ठपर्व्वमात्रमवदानं तिरश्चीनमवमतीति। तस्मादङ्गुष्ठपर्व्वद्वयमात्रं खण्डयित्वा त्यक्तव्यमिति।

(७३) तदिदमिति। सर्व्वप्रदानं हविषस्तदर्थत्वादित्यधिकरणस्य कुमारिलभट्टमततन्त्रवार्त्तिके स्थितमित्यर्थः।

र्थेन वषट्कारेण स्मारितः सन् यजमानेनानुष्ठेय इति ता- यौगपद्यसम्भवात्। तदिदं (७३) सर्व्वप्रदानाधिकरण-वार्त्तिके स्थितम्। प्रधानपूर्व्वकाला प्रतिपत्तिर्यथा—शकृत् संप्रविध्यति लोहितं निरस्यतीति शकृत्संप्रवेधनलोहितनिरसने। (७४) इदमपि 'पश्वावनालम्भाल्लोहितशकृतोरकर्म्मत्वम्' इत्यधिकरणे स्थितम्।

उपयोक्ष्यमाणसंस्कारोऽप्यनेकविधः (७५)। साक्षाद्-विनियुक्तसंस्कारः, साक्षाद्विनियुक्तस्य यदुपकारकं तत्संस्कारः,

---

(७४) इदमपीति। एतदधिकरणमधिकृत्य माधवाचार्य्यैरभिहितम्। 'अग्नीषोमीय-पशौ श्रूयते। हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षस' इति। तथान्यदपि श्रुतं 'शकृत् संप्रविध्यति लोहितं निरस्यती'ति। तत्र हृदयादीनां शकृदादीनाञ्च प्रकरण-पाठसाम्यात् पशुसाध्यत्वसाम्याच्च हृदयादिवच्छकृदादिकमपि पश्वालम्भस्य प्रयोजकमिति चेन्मैवं पशुयागो हि हविःसाध्य हविष्ट्वं चात्तुं योग्यत्वात् हृदयादीनामेव न त्वयोग्ययोः शकृल्लोहितयोः। तस्मात् हृदयादिकमेव प्रयोजकं। शकृत् संप्रवेधो लोहितनिरसनञ्च इत्येतदुभयं प्रतिपत्तिमात्रमिति।

(७५) संस्कारजनकगुणकर्म्मणः पूर्व्वमुपयुक्तसंस्कारकत्वेन उपयोक्ष्यमाणसंस्का-रकत्वेन च द्विधाविभागोऽभिहितः, उपयोक्ष्यमाणसंस्कारस्यानेकविधत्वेन उपयोक्ष्य-माणसंस्कारकं गुणकर्म्माप्यनेकविधमित्यादौ तत्संस्कारस्यानेकविधत्वं दर्शयति उपयोक्ष्यमाणसंस्कारोऽपीति। ननु उपयोक्ष्यमाणसंस्कारत्वसामान्यधर्म्ममादाय साक्षाद्विनियुक्तसंस्कारत्वेन कथं विभागः सम्भवति? सामान्यधर्म्मविरहात्, तथाहि उपयोक्ष्यमाणसंस्कारत्वं भविष्यदुपयोगकर्म्मद्रव्यादिसंस्कारत्वं तच्चातीतविनियोगकर्म्म संस्कारे न वर्त्तते विरोधादिति, कथं वा विनियोक्ष्यमाणसंस्कारत्वेन विभागः? तस्य परस्परविरुद्धव्याप्यधर्म्मत्वाभावात्। सत्यमुपयोगविनियोगयोर्भेदात्। उपयोगः प्रधान-यागक्रियासम्बन्धः विनियोगस्तु यागाङ्गं यत्किञ्चित् क्रियासम्बन्धः, अतएव वैश्वदेवयागाङ्ग-

विनियोच्यमाणसंस्कारश्चेति। तत्राद्यो यथा व्रीहीनवहन्तीति। व्रीहिभिर्यजेतेति साक्षाद्विनियुक्तव्रीहीणामवहननसंस्कारः। द्वितीयो यथा—'वत्समालभेतेति'। दोहाङ्गत्वेन साक्षाद्विनियुक्तस्य गोद्रव्यस्योपकारको यो वत्सस्तत्संस्कारकमिदमालम्भनम् (७६)। तृतीयो यथा—'तप्ते पयसि दध्यानयतीति'। अत्र "सा वैश्वदेव्यामिक्षेति" वाक्येन तच्छब्देन निर्दिश्य वैश्वदेवयागाङ्गत्वेन विनियोच्यमाणं यत् पयस्तत्संस्कारकत्वाद्विनियोच्यमाणसंस्कारकं दध्यानयनम्। पशुपुरोडाशयागस्तूपयुक्तोपयोच्यमाणदेवतासंस्कारार्थः, त्यागांशे अदृष्टार्थश्च। अत्र तत्संस्कार्य्याग्नीषोमदेवताया वपायागे उपयुक्तार्थत्वात्, हृदयाद्यङ्गयागेषु उपयोच्यमाणत्वाच्च (७७)। स्विष्टकृद्यागो द्रव्यांशे देवतांशे च उपयुक्तसंस्कारार्थः, त्यागांशे अदृष्टार्थश्च। सूक्तवाकसाधनप्रहरणमपि (७८) तथैव। उत्तमप्रयाजो यक्ष्यमाणदेवतासंस्कारत्वात्तदंशे उपयोच्यमाण-संस्कारः, इतरांशे अदृष्टार्थः हृदयादिहविर्यागात्पूर्व्वं क्रियमाणो वपाहोमोऽपि वपांशे प्रतिपत्ति-

त्वेन विनियोच्यमाणमिति स्वयमेव वक्ष्यति। अवहननसंस्कारः अवहननेन संस्कारः शुद्धिरित्यर्थः।

(७६) इदमालम्भनमिति। आलम्भनमत्र स्पर्शः।

(७७) उपयोच्यमाणत्वाच्चेति। अनोपयुजेर्हृदयकर्म्मकयागोद्देशे लक्षणा एवं वपायागे उपयुक्तत्वादित्यत्रोपयुजेरपि लक्षणाबीजं देवताया उपयोगकर्म्मत्वबाधः। तत्तत्यागे देवताया उपयोक्ष्यमाणत्वाभिधानञ्च।

(७८) सूक्तवाकेति। इष्टदेवताप्रकाशको मन्त्रः सूक्तवाकः। सूक्तवाकः साधन-

वितरांशे अदृष्टार्थं इत्याद्यूह्यम्। केचित्तु उपयोक्ष्यमाण-संस्कारभिन्नसंस्कारकर्म्मत्वं प्रतिपत्तिकर्म्मत्वम्। चतुरवत्त-द्रव्यस्य होमेन भस्मीभूतस्य होमानन्तरमुपयोक्ष्यमाणत्वा-भावात् तद्भिन्नत्वं होमेऽस्तीति लक्षणसङ्गतिः। अत्रायं विशेषः। अर्थकर्म्मणि द्रव्यापेक्षया कर्म्मणः प्राधान्यम्, कर्म्मणि द्रव्यस्य गुणत्वम्। यथा अग्निहोत्रादौ दध्यादेर्गुणत्वम्। गुणकर्म्मणि द्रव्यस्य प्राधान्यम्, द्रव्ये च कर्म्मणो गुणत्वम्। यथा—व्रीहीन् प्रोक्षति अवहन्तीत्यादौ द्वितीयया व्रीहीणां क्रियासाध्यत्वप्रतीतेः क्रियापेक्षया द्रव्यस्य प्राधान्यम्, प्रोक्षणादिक्रियायास्तदपेक्षया गुणत्वमिति। पुनरपि (७९) गुणकर्म्म चतुर्विधम्। उत्-पत्त्याप्तिविकृतिसंस्कृतिभेदात्। तत्रोत्पत्तिसंस्कारो यथा अग्नीनादधीतेति। मन्त्रविशेषैः सम्भारेषु निधापिता अपि आहवनीयादय उत्पद्यन्त इत्याहवनीयाद्युत्पत्तिहेतुभूत-

---

यस्य तत् सूक्तवाकसाधनं सूक्तवाकसाधनञ्च तत् प्रहरणञ्चेति सूक्तवाकसाधनप्रहरणं सूक्तवाककरणकं यत् प्रस्तरप्रहरणं तदपि द्रव्यांशे देवतांशे च उपयुक्तसंस्कारार्थं त्यागांशेऽदृष्टार्थञ्चेत्यर्थः। तथा च श्रूयते 'सूक्तवाकेन प्रस्तरं प्रहरती'ति। 'इदं द्यावा पृथिवी भद्रमभूदि'त्यादिको मन्त्रः सूक्तवाकः। प्रस्तरो दर्भमुष्टिस्तस्य प्रहरणमग्नौ प्रक्षेपः। उत्तमप्रयाजः स्वाहाकारं यजतीति वाक्यविहितोऽन्त्यप्रयाजः, पञ्चमप्रयाज इति यावत्। इतरांशे त्यागांशे।

(७९) संस्कारजनकगुणकर्म्मणो द्विधाविभागमुक्त्वा उपयोक्ष्यमाणसंस्कारस्य त्रैविध्यात्त्रिधा विभागमभिधाय उत्पत्त्यादिभेदेन संस्काराणां चतुर्द्धा विभागात् गुणकर्म्म-पुनश्चतुर्द्धा विभजते पुनरपीति।

आप्ति

संस्कारजनकत्वादाधानस्य उत्पत्तिसंस्कारत्वम्। अप्तिसंस्कारो यथा—(८०) स्वाध्यायोऽध्येतव्य इति। अध्ययनेन स्वाध्याय आप्यत इत्याप्तिसंस्कारोऽयम्। विकृतिर्यथा—व्रीहीनवहन्तीति। अत्र व्रीहिगतवैतुष्यरूपविकृतिजनकत्वादवहननं विकृतिसंस्कारः संस्कृतिर्यथा—व्रीहीन् प्रोक्षतीति। अत्र प्रोक्षणस्य व्रीहिगतातिशयरूपसंस्कृतिजनकत्वात् संस्कृतिरूप-गुणकर्मत्वम्। अत्राधानमध्ययनञ्च स्वतन्त्रं गुणकर्म न तु क्रत्वङ्गम् (८१)। प्रोक्षणादिकं सर्वं क्रत्वङ्गं गुणकर्मेति ध्येयम्।

अर्थकर्म त्रिविधम्। नित्यनैमित्तिककाम्यभेदात् (८२)

---

(८०) एषां यौगिकनाम्ना लक्षणमङ्गीकृत्य तदनुरूपं प्रत्येकमुदाहरणं दर्शयति यथेति।

(८१) नतु क्रत्वङ्गमिति। ननु आधानमध्ययनञ्चार्थकर्म कुतो न स्यात् कुतो वानयोर्यागाङ्गत्वाभावे गुणकर्मत्वं। मैवं 'स्वाध्यायोऽध्येतव्य' इत्यध्ययनविधौ तदध्ययन-स्वार्थज्ञानरूपदृष्टार्थत्वेन व्यवस्थापनादपूर्व्वजनकत्वाभावान्नार्थकर्म्मत्वम्। आत्मगतापूर्व्व-जनकस्यैवार्थकर्म्मत्वाभिधानात्। आधानस्यापि निर्वापिता अपि आहवनीयादयः मन्त्र-विशेषैरुत्पद्यन्त इत्यभिधानात् दृष्टार्थत्वमेव। गुणकर्म्मत्वन्तु प्रधानेऽपि कर्म्मणि ग्रन्थ-क्रन्मते वर्त्तत एव संस्कारजनकं गुणकर्म्मेति तल्लक्षणात्। अनयोरुत्पत्त्याप्तिसंस्कार-जनकत्वमिति स्वयमभिहितत्वादिति।

(८२) अर्थकर्म्माणि विभजते अर्थकर्म्मेति। नित्यमिति नित्यत्वमकरणे प्रत्य-वायजनकत्वं केचित्तु 'क्षयं केचिदुपात्तस्य दुरितस्य प्रचक्षते' इत्यादिवाक्यैरुपात्तदुरितक्षय-जनकं कर्म्म नित्यमित्याहुः। तन्न 'नित्यनैमित्तिकैरेव कुर्व्वाणो दुरितक्षय'मित्यादिवाक्यै-र्नैमित्तिकानामपि दुरितक्षयजनकत्वावगमात् तत्रातिव्याप्तेः। नित्यनैमित्तिकयोरकरणे

तत्र "यावज्जीवमग्निहोत्रं जुहोति" "सायं प्रातर्जुहोतीति" जीविता पुरुषेण सायंप्रातःकालयोर्नियमेन कर्त्तव्यतया अवगतमग्निहोत्रादिकं नित्यम्। 'अग्नये पथिकृते (८३) पुरोडाशमष्टाकपालं निर्वपेदिति" दर्शपौर्णमासातिपत्तिनिमित्तक-पथिकृदिष्ट्यादिकं नैमित्तिकम् (८४)। नित्यनैमित्तिकयोरकरणे प्रत्यवाय एव, कृते फलं नास्तीति केचित्। अन्ये तु दुरितनिवृत्तिः फलमस्ति, "नित्यनैमित्तिकैरेव कुर्व्वाणो दुरितक्षयमित्यादिवाक्यैः" प्रत्यवायनिवृत्तेः फलत्वेन श्रूयमाणत्वात्। न चैवं तयोरपि काम्यत्वापत्तिः फलवत्त्वादिति वाच्यम्? फलकामनापूर्व्वकानुष्ठानाभावात्। तत्तद्विधिवाक्ये फलकाममुद्दिश्य तदर्थफलसाधनत्वेन विधानाभावाच्च काम्यत्वानुपपत्तेः। काम्यमपि (८५) कर्म्म त्रिविधम्। केवलमैहिक-

---

प्रत्यवाय एव करणे फलं नास्तीति यत् केषाञ्चिन्मतं तन्न चारु मन्यामहे। नहि दर्शपौर्णमासातिपतिजन्यपापातिरिक्तपापमुत्पद्यते कल्पनागौरवात्।

(८३) पथिकृते। पथिकृन्नाम्ने अग्नये इत्यर्थः।

नैमित्तिकमिति। नैमित्तिकत्वं निमित्तनिश्चयवदधिकारिकर्त्तव्यत्वम्। काम्यत्वं फलकामनावत् पुरुषकर्त्तव्यत्वम्। न चैवं 'सन्ध्यामुपासते ये तु नियतं संशितव्रता विधौतपापास्ते यान्ति ब्रह्मलोकमनामय'मित्याद्यर्थवादान्नित्यानामपि सन्ध्यावन्दनादीनां फलवत्त्वावगमात् काम्यत्वापत्तिरिति वाच्यं फले विधिबोध्यत्वमिति विशेषणस्य निवेशनीयत्वात् ध्वंसप्रतियोगित्वेनापि फलं विशेषणीयम्। तेन नित्यकर्म्मणां भाव्याधिकरणे उपात्तदुरितक्षयस्य भाव्यत्वावधारणेऽपि न क्षतिरिति।

(८५) फलानामैहिकामुष्मिकतत्साधारणत्वेन त्रिधा विभागमवलम्ब्य त्रिधा काम्यं विभजते काम्यमपीति। अपिरेवार्थे काम्यमेव त्रिविधं न नित्यनैमित्तिके इत्यर्थः।

फलम्, आमुष्मिकफलम, ऐहिकामुष्मिकं फलकञ्चेति। तत्राद्यं यथा—कारीर्य्यादि, तत्तत्समयवर्त्तिंशुष्यत्शस्यसञ्जीवनहेतुवृष्टिकामिना क्रियते। न कालान्तरभाविवृष्टिकामेन जन्मान्तरीयवृष्टिकामेन वा। केवलामुष्मिकफलकं यथा—स्वर्गाद्यर्थं दर्शपौर्णमासादिकं स्वर्गस्य इहलोकभोग्यत्वाभावात्। ऐहिकामुष्मिकसाधारणफलकं यथा—'वायव्यं श्वेतमालभेत भूतिकाम' इति भूत्यादिफलमित्यन्यत्र विस्तारः। ननु (८६) दर्शपौर्णमासादिकर्म्मणां व्रीह्यादिद्रव्याणाञ्च प्रत्यक्षत्वेन लौकिकत्वात्, कथं वेदस्यालौकिकार्थबोधकत्वमिति चेन्न,—कर्म्मणां प्रत्यक्षत्वेऽपि तेषां स्वर्गादिफलसाधनं [स्वर्गादिफलसाधनत्वमप्रत्यक्षमिति तत्फलसाधनतया तत्कर्म्मकर्त्तव्यमित्येवं] तथा कर्म्मकर्त्तव्यताबोधकस्य वेदस्यालौकिकार्थबोधकत्वात्। एवं व्रीह्यादीनां यागादिक्रियासाधनत्वं न प्रत्यक्षवेद्यमिति। तद्बोधकस्यापि वेदवाक्यस्यालौकिकार्थबोधकत्वमिति न दोषः। इदानीं विधिवाक्यस्य विधायकत्वप्रकारः कथ्यते। तत्र 'स्वर्गकामो यजेते'त्यत्र यजिधातोरुपरितने तप्रत्यये

---

(८६) स्वर्गस्य इहलोकभोग्यत्वाभावादित्युक्तं। तत्रेदं चिन्त्यते दर्शपौर्णमासादिकर्म्मणां लौकिकत्वात् तेभ्यो लौकिकमेव फलं जायतां नहि लौकिकादलौकिकं फलं कुत्रचिद्दृष्टं। दृष्टञ्च लौकिकप्रत्यक्षविषयेन दण्डादिना लौकिकप्रत्यक्षविषयो घटादिरेव जन्यते। इत्येवं वितर्कयन् सिद्धान्तयितुमुपक्रमते नन्वित्यादि। वेदस्य दर्शपौर्णमासाभ्यां मासं यजन्ते इत्यादिकस्य अलौकिकार्थबोधकत्वम् अलौकिकस्वर्गादिफलबोधकत्वमित्यर्थः।

धर्म्मद्वयमस्ति। आख्यातत्वं लिङ्त्वं चेति। तत्र आख्यातत्वञ्च सर्व्वलकारसाधारणम्। तदवच्छेदेन (८७) लिङ्प्रत्ययः पुरुषप्रवृत्तिरूपाम् अर्थभावनां प्रतिपादयति। सा चार्थभावना किं? केन? कथमिति अंशत्रयविशिष्टा। तथाहि यजेतेत्यत्र प्रथमं प्रत्ययेन भावयेदिति प्रतीयते। सुबन्ताभिहितानां (८८) सर्व्वेषां कारकाणां तिङन्तार्थक्रियान्वयनियमे सति तिङन्तार्थस्य प्राधान्यात्। तत्र प्रकृत्यर्थापेक्षया प्रत्ययार्थस्य प्राधान्यात्। प्रथमप्रत्ययार्थभावनाया उपस्थितिर्युक्ता। ततः करोतिसमानार्थकं भावयतेः सकर्म्मकत्वात् किंभावयेदिति कर्म्माकाङ्क्षायां भिन्नपदोपात्तोऽपि स्वर्गो भाव्यत्वेनान्वेति। दुःखात्मकस्य (८९) यागस्य ईप्सिततमत्व[त्व]रूपकर्म्मत्वायोग्य-

(८७) विधेयकर्म्माण्युक्ता तद्बोधकविधिवाक्यानां विधायकत्वप्रकारं निर्णेतुमुपक्रमते नन्वित्यादि। सर्व्वलकारसाधारणं लडादिदशलकारसाधारणं। ननु एकस्य लिङ्पदस्य भावनाद्वये संख्यादावपि शक्त्याङ्गीकारे अनेकशक्तिकल्पनागौरवापत्तिरतः शाब्दीभावनेव लिङाप्रत्येतव्येति मनसि कृत्वाह तदवच्छेदेनेति आख्यातत्वावच्छेदेनेत्यर्थः। अयमाशयः लिङ्पदस्यैकत्वेऽपि अवच्छेदकभेदेन भिन्नत्वात आख्यातत्वावच्छेदेनार्थभावनायां लिङ्त्वावच्छेदेन शब्दभावनायामेकवचनत्वावच्छेदेनैकत्वसंख्यायाञ्च शक्तिकल्पनान्न नानाशक्तिकल्पनेति भावः।

(८८) प्रथमं प्रत्ययेन भावयेदिति प्रतीयते इत्यत्र हेतुमाह सुबन्ताभिहितानामित्यादि। प्राधान्यादिति उत्तरप्रतीतिविषयत्वेन विशेष्यत्वात प्राधान्यं तस्मादित्यर्थः। ननु तथापि कारकाणां क्रियान्वयनियमात प्रथम यागोपस्थितिर्युक्ता इत्यत आह तत्रेति। उपस्थितिर्युक्तेति मुख्यविशेष्यत्वादिति भावः।

(८९) नन्वेकपदोपात्तयाग एव कर्म्मत्वेनान्वीयतां किं व्युत्पत्तिवैचित्र्य-

त्वात्। स्वर्गस्य त्वानन्दात्मकत्वेन ईप्सिततमतया कर्म्म-त्वेनान्वययोग्यत्वात्। ततश्च स्वर्गं भावयेदिति बोधो भवति। ततः केनेति करणाकाङ्क्षायां समानपदोपात्तो यागः करणत्वेनान्वेति। (९०) यागेन स्वर्गं भावयेदिति यागेन स्वर्गं कुर्य्यादित्यर्थः। ततः कथं यागेन स्वर्गं कुर्य्यादिति कथम्भावाकाङ्क्षायामग्न्यन्वाधानावहननादिजन्यदृष्टोपकारेण प्रयाजादिजनितादृष्टोपकारेण च सहितेन यागेन स्वर्गं कुर्य्यादित्यग्न्यन्वाधानप्रयाजादिकमङ्गजातमितिकर्त्तव्यतात्वेनान्वेति। कथम्भावाकाङ्क्षापूरकत्वमितिकर्त्तव्यतात्वम्। यथा (९१) ओदनकामः पचेदित्यत्र लिङा भावना प्रतीयते। किं भावयेदित्याकाङ्क्षायामोदनो भाव्यत्वेनान्वेति। केनेत्याकाङ्क्षायां पाकेनेति लभ्यते। कथमित्याकाङ्क्षायां तृणफुत्कारादिसहितेनेति। ततश्च तृणफुत्कारादुपकृतेन पाकेन तेजः-संयोगेन ओदनम्भावयेदिति वाक्यार्थः सम्पद्यते, (९२) तद्व-

---

कल्पनया तत्राह—दुःखात्मकस्येति। दुःखात्मककर्म्मणो इष्टत्वेन भाव्यत्वासम्भवादिति भावः।

(९०) करणत्वेनेति। तथा चोक्तं 'विधाने चानुवादे च यागः करणमिष्यत' इति।

(९१) वैदिकभावनां निरूप्य लौकिकवाक्येन दृष्टान्तयति यथेति।

(९२) वाक्यार्थः सम्पद्यत इति। यद्यपि पाकेनेति तृतीया श्रवणाभातात् ओदनमिति द्वितीया श्रवणाभावाच्च ओदनकामः पचेदिति अत्र पाकेन ओदनं भावयेदिति वाक्यार्थो न घटते तथापि पाकस्य भावनायां करणतासम्बन्धेनान्वयात् ओदनस्य च कर्म्मतासम्बन्धे तृणफुत्कारादीनान्तु कथम्भावाकाङ्क्षायां वाक्य एव प्रवेशोऽन्यथा शाब्दबोधे भानासम्भवात्। भान्वयात् संसर्गतया कर्म्मताकरणता-

वेदेऽपि बोध्यः। सः एव लिङ्प्रत्ययो लिङ्त्वावच्छेदेन शब्दभावनां प्रेरणाख्यामभिधत्ते। लोकेऽपि गामानयेत्याचार्य्य-वाक्यश्रवणानन्तरम्—अयमाचार्य्यो मां गवानयने प्रेरयतीति (९३) प्रेरणाख्यव्यापारं ज्ञात्वैव शिष्यो गवानयने प्रवर्त्तत इत्यन्वयव्यतिरेकाभ्यां प्रेरणाज्ञानं प्रवृत्तिकारणम्, (९४) प्रेरणाज्ञानस्य चान्वयव्यतिरेकाभ्यां लिङादिश्रवणजन्यत्वा-वधारणात्, लिङादेः प्रेरणायां शक्तिर्लोके गृह्यते इति वेदेऽपि तत्रैव शक्तिकल्पनौचित्यात्। इयांस्तु विशेषः—लोके गवा-नयनादिप्रवृत्त्यनुकूलः प्रेरणाख्यो व्यापारः प्रयोक्तृपुरुषगताभि-प्रायविशेषः (९५), वेदे तु प्रयोक्तृपुरुषाभावात् (९६) लिङादि-

---

प्रतीतेः शिष्यान् बोधयितुं तृतीयया द्वितीयया च वाक्यार्थमाह पाकेन ओदनं भावयेदिति। ननु भावनावाचिनाख्यातेन कर्त्तृत्वस्यानभिधानात् कर्त्तुश्च भावनाक्षेपेण भावनायां प्रकारतयान्वयात् कर्त्तरि तृतीयैव प्राप्नोति कथं ओदनकामः पचेदित्यादौ कर्त्तरि प्रथमोच्यते ? नैवं अभिहिते प्रथमा इत्यादौ कर्त्तृगतसंख्यानेऽभिहिते प्रथमा इत्यर्थाङ्गीकारात्।

(९३) प्रेरयतीति। नच गामानयेत्यादौ प्रेरणावाचकशब्दाभावात् कथं प्रेरयतीति प्रतीयत इति वाच्यं। प्रेरणापरनामानुत्यर्थकपञ्चम्या तदर्थप्रतीतेः।

(९४) प्रेरणाज्ञानं प्रवृत्तिकारणमिति। ननु "विषं भुङ्क्ष्व" इत्यादौ सत्यपि प्रेरणाज्ञाने इष्टविषभोजनादौ प्रवृत्त्यभावादसत्यपि प्रेरणाज्ञाने इष्टभोजनादौ स्वतः प्रवृत्त्युत्पत्तेः, कथं प्रेरणाज्ञानं प्रवृत्तौ कारणमित्युक्तं सम्भवति। नैवं वैदिकत्वेन प्रेरणाज्ञानस्य विशेषणीयत्वादिति।

(९५) अभिप्रायविशेष इच्छाविशेष इत्यर्थः।

(९६) प्रयोक्तृपुरुषाभावादिति। वेदस्यापौरुषेयवाक्यत्वस्य मीमांसासिद्धान्तसिद्धत्वादिति भावः। स्मृतावप्युक्तं—

शब्दनिष्ठ (९७) एव स इत्यङ्गीक्रियते। अतएव शब्दनिष्ठव्यापारत्वाच्छाब्दीभावनेत्युच्यते, यागहोमादिविषयप्रवृत्तिहेतुत्वात् प्रवर्त्तना प्रेरणेति चोच्यते। सैषा शब्दभावनाप्यंशत्रयविशिष्टा। तत्र पुरुषप्रवृत्तिरूपार्थभावना भाव्यत्वेनान्वेति। अध्ययनावगतलिङादिकं करणत्वेनान्वेति। अर्थवादप्रतिपाद्यप्राशस्त्यज्ञानमिति-कर्त्तव्यतात्वेनान्वेति। तथा च(९८)साङ्गवेदाध्येतारोऽधीतव्याकरणनिगमनिरुक्तादिवशाद्व्युत्पत्तिमन्तः पुरुषा अध्ययनगृहीतस्वाध्यायगतलिङादिभिः प्राशस्त्यज्ञानसचिवैर्यागाद्यर्थान् कर्त्तव्यत्वेन बुद्ध्वा यागादीननुतिष्ठेरन् इति शब्दभावनाबोधः।

---

"न कश्चित् वेदकर्त्ता च वेदस्मर्त्ता पितामहः।
तथैव धर्म्मं स्मरति मनुः कल्पान्तरान्तरे॥" इति

(९७) लिङादिशब्दनिष्ठ इति। लिङादिशब्दनिष्ठः स भावनाख्यव्यापारः शक्तिरूप एव। यौगिकार्थमाह अतएवेति। अंशत्रयवत्त्वं भावना सामान्यधर्म्म इत्याह सैषा शब्दभावनापीति। तत्र किं भाव्यमित्याह तत्रेति, एकप्रत्ययगम्यत्वादिति भावः। अध्ययनावगतेति। लिङादिकं प्रवर्त्तनाशक्तया अध्ययनेनावगतमित्यर्थः। करणत्वेनान्वेतीति तेषाञ्च लिङादीनां करणत्वं न भावनोत्पादकत्वेन तत्पूर्व्वमपि तस्याः शब्दे सत्त्वात् किन्तु भावनाज्ञापकत्वेन शब्दभावनाभाव्यनिर्व्वर्त्तकत्वेन वेति अर्थसंग्रहकृत्। एवमर्थभावनायां यागादेः करणत्वमपि न भावनोत्पादकत्वेन प्रवृत्तिरूपायास्तस्या यागादिसाध्यत्वाभावात्। किन्त्वर्थभावनाभाव्यस्वर्गादिजनकत्वेनैवेति ध्येयम्।

(९८) ननु लिङादिर्न करणं अनधीतव्याकरणादेः पुरुषस्य सहस्रकृत्वो-लिङादिश्रवणेऽपि अयं शब्दो मां प्रेरयतीति बोधासम्भावात् इत्यतोऽध्ययनावगतमिति लिङादिविशेषणं प्रदत्तं तदेव विशदीकृत्य दर्शयति तथाचेति।

अनुतिष्ठेरन् अनुष्ठानं कुर्य्युरित्यर्थः, अनुष्ठानं प्रवृत्तिः। तेन पुरुष-प्रवृत्तेः (९९) शब्दभावनाभाव्यत्वमच्युतम्। इयञ्च शब्दभावना ज्योतिष्टोमादिप्रातिस्विकवाक्येषु स्वरूपेण प्रतीयमानापि कर्त्तव्य-त्वेन न प्रतीयते, [ न च ] अर्थभावनाया एव [ विधेयत्वमिति वाच्यम्. ] तेषु कर्त्तव्यत्वावगमात्। किन्तु स्वाध्यायोऽध्येतव्य इतिवाक्य एव कर्त्तव्यत्वेन प्रतीयते। नचात्राप्यर्थभावनाया एव विधेयत्वमिति वाच्यम्। 'स्वाध्यायोऽध्येतव्यः' इति वाक्यस्यार्थ-भावनाया एव सकलविधिवाक्यस्थशब्दभावनारूपत्वात्(१००)। तथाहि—अधिपूर्व्वकादिङ् अध्ययने इति धातोः कर्म्मणि तव्य

---

(९९) तेनेति पुरुषप्रवृत्तेः पुरुषप्रवृत्तिरूपाया अर्थभावनाया इत्यर्थः। कर्त्तव्यत्वेन न प्रतीयते विधेयत्वेन न प्रतीयत इत्यर्थः। कर्त्तव्यत्वावगमात् विधेयत्वा-वगमादित्यर्थः। अत्रायमाशयः—मीमांसकैर्भावनाया एव विधेयत्वमङ्गीक्रियते नतु यागादिकर्म्मणां, तेषां करणत्वेन भावनान्वयेनाप्राधान्यात्। तथाचैकादशीतत्त्वे भाव्याधिकरणे स्मार्त्तेनाप्यभिहितं तत्तद्विधिवाक्येषु भावनाया एव विधेयत्वादिति। एवंस्थिते विचारः किं अर्थभावनाया विधेयत्वं उत शब्दभावनायाः? तत्र शब्दभाव-नाया एव मुख्यविशेष्यत्वेन प्राधान्यात् तस्या एव विधेयत्वं युक्तं एवं प्राप्ते उच्यते तस्याः शब्दवृत्तिव्यापाररूपत्वेन नित्यत्वेन चानुष्ठानायोग्यत्वात् अर्थभावनाया एव पुरुषप्रवृत्ति-व्यापाररूपत्वेन साक्षात् फलजनकत्वेन च विधेयत्वमित्येवं रूपेण कर्त्तव्यत्वावगमा-दित्यर्थः।

(१००) सकलविधिवाक्यस्थशब्दभावनारूपत्वादिति। स्वाध्यायोऽध्येतव्य एतद्विधिवाक्यस्थविध्यर्थक-तव्यप्रत्ययवाच्या या शब्दभावना तस्यां स्वाध्यायपद-वाच्य-सकल-विधिवाक्यस्थ-लिङादिवाच्यशब्द भावनानां साध्यत्वनान्वयात्। शब्द-भावनायां साध्यत्वेनार्थभावनाया एव अन्यान्वयदर्शनात्तासां शब्दभावनाना-

प्रत्ययो विहितः, कर्म्म च स्वाध्यायः प्रधानम्, तत्संस्कारक-मध्ययनं गुणकर्म्म, व्रीहिसंस्कारकप्रोक्षणादिवत्। अध्ययनजनितग्रहणसंस्कारविशिष्टस्वाध्यायस्य प्रयोजनाकाङ्क्षायां स्वाध्यायगतलिङादिविशिष्टवाक्यसामर्थ्यलभ्यं यदनुष्ठानोपायकं यागादिरूपार्थज्ञानं तदेव दृष्टत्वात्, तत्तत्कर्म्मानुष्ठानद्वारा स्वर्गादिरूपालौकिकश्रेयःसाधनत्वाच्च प्रयोजनम्. कर्म्मावबोधं

---

मेतद्विधेरर्थभावनात्वमिति भावः। न च तासां नित्यत्वात् साध्यत्वेनान्वयायोग्यत्वमिति वाच्यं? अन्वयायोग्यत्वात् स्वाध्यायोऽध्येतव्य इति विधेरर्थज्ञानरूपदृष्टार्थत्वेन व्यवस्थापनाच्च तत्तत्शब्दभावनाविषयकज्ञानस्यैव साध्यत्वाङ्गीकारात्। न च तथापि स्वाध्यायगतलिङादिषु या याः प्रवर्त्तनाः सन्ति तद्विषयकज्ञानं भावनीयमिति विध्यर्थपर्य्यवसाने यागादेरर्थज्ञानं विधेयं न स्यादिति वाच्यं। तत्तद्विधिवाक्यस्थार्थभावनासु यागादीनां करणत्वनान्वयात् तासाञ्च तासु शब्दभावनासु साध्यत्वेनान्वयात् तासाञ्च शब्दभावनानामेव साध्यत्वेनान्वयात् परम्परायागादिविशिष्टशब्दभावनायाः साध्यत्वाङ्गीकारात् विशिष्टज्ञानस्य विशेषणज्ञानं विनासम्भवात् च। न चाध्ययनं विनापि एतदेवं कुरु एतत् कृत्वा एतत् कुरु एवमाचार्य्योपदेशादिना यागादेरनुष्ठानसम्भवादध्ययनविधेरानर्थक्यमिति वाच्यम्, अध्ययनेनैव बुद्धा यागादिरनुष्ठेय इति नियमेन सार्थक्यात्। तेन स्त्रीशूद्रानुपनीतानां यागेऽनधिकारोऽपि नियमफलं प्रत्येतव्यं। एतदेव विशदीकृत्य प्रतिपादयितुमाह तथाहीति। अध्ययनं गुणकर्म्मेति स्तोत्रगुणवाक्यविहितं गुणकर्म्मेत्यर्थः। यद्वा सगुणकर्म्मोत्पत्तिवाक्यविहितं सगुणकर्म्म अध्ययनगृहीतसंस्कारवत्स्वाध्याय इति। अध्ययनेति अध्ययनजनितं यत् ग्रहणं ज्ञानं तज्जन्यसंस्कारविशिष्टस्य स्वाध्यायस्येत्यर्थः। ननु अर्थज्ञानं न प्रयोजनं सुखदुःखनिवृत्त्योरन्यतरस्यैव प्रयोजनत्वाभिधानात् अतः परम्परास्वर्गादिरूपसुखहेतुतया गौणप्रयोजनत्वं प्रतिपादयितुं हेत्वन्तरमाह तत्तत्कर्म्मेत्यादि।

विना कर्म्मानुष्ठानायोगात्। न त्वदृष्टं प्रयोजनम्, दृष्टफले सम्भवत्यदृष्टकल्पनायोगात्। तथाच (१०१) स्वाध्यायविधिनैव स्वाध्यायगतविधिवाक्यगतलिङ्गादिप्रतिपादिताः सर्वाः शब्द-भावना अंशत्रयविशिष्टाः कर्त्तव्यत्वेन विधीयन्ते—साङ्ग-(१०२) वेदाध्ययनव्युत्पन्नाः पुरुषाः अध्ययनगृहीत-स्वाध्यायगत-लिङादिभिरर्थवादावगतप्राशस्त्यरूपाङ्गसचिवैः फलवद्यागादि-कर्त्तव्यतां बुद्ध्वा यागादीननुतिष्ठेयुरिति। अनुतिष्ठेयुः प्रवृत्तिं कुर्य्युरित्यर्थः। तत्र (१०३) पुरुषप्रवृत्तेर्भाव्यत्वेनान्वयात्, अध्ययनावगतलिङादेः करणत्वेनान्वयात्, प्राशस्त्यज्ञानस्येति-कर्त्तव्यतात्वेनान्वयात्—शब्दभावनाया अप्यंशत्रयवैशिष्ट्यमर्थ-भावनाया इव द्रष्टम्। तत्र (१०४) समीहितस्वर्गादि-

---

(१०१) तथाचेति। स्वाध्यायविधिना स्वाध्यायघटितस्वाध्यायोऽध्येतव्य इति विधिना स्वाध्यायेति स्वाध्यायगतानि यानि विधिवाक्यानि अग्निहोत्रं जुहुयादित्यादि-कानि तद्गता ये लिङादयः तैः प्रतिपादिता इत्यर्थः।

(१०२) विधानफलं दर्शयति साङ्गेति।

(१०३) ननु प्रवृत्तिं कुर्य्युरिति कथं सङ्गच्छते शब्दभावनाया विधेयत्वात् प्रवृत्तेरर्थभावनारूपत्वात् तत्राह तत्रेति। तत्र शब्दभावनायां पुरुषप्रवृत्तेरर्थभाव-नायाः। तथाच साध्यतयार्थभावनाविशिष्टशब्दभावनाया विधेयत्वादर्थभावनाया अपि परम्पराविधेयत्वमिति भावः।

(१०४) शब्दभावनाया अंशत्रयवैशिष्ट्यमस्ति न वेति संशयनिराशायाह शब्द-भावनाया इति। तत्रेति विधिवशात् प्रवर्त्तनार्थकविधिसामर्थ्यादित्यर्थः। तदेव दर्शयति प्रवर्त्तनापर इति। स्वभाव्येति स्वपदेनात्र प्रवर्त्तनोच्यते। प्रवर्त्तनायाः

भाव्यकत्वमपि विधिवशादेव। प्रवर्त्तनापरो विधिर्यागादेः पुरुषार्थसाधनत्वे तत्र पुरुषं प्रवर्त्तयितुं शक्नोतीति स्वभाव्य-पुरुषप्रवृत्तिविषयस्य यागादेः पुरुषाभिलषितस्वर्गादिसाधनत्व-मापादयति। अन्यथा स्वस्य प्रवर्त्तनात्वमेव न स्यात्। प्रवृत्ति-हेतुव्यापारस्यैव प्रवर्त्तनात्वात्। लडादिस्थले तु प्रवर्त्तनात्मक-विधेरभावादर्थभावनायाः पुरुषार्थभाव्यकत्वनियमो नास्ति।

भावनात्वं (१०५) नाम भवितुः प्रयोजकव्यापारत्वम् (१०६)। तत्रार्थभावनायां भवितुर्जायमानस्य स्वर्गादेः प्रयोजकव्यापारत्वात् लक्षणसङ्गतिः। शब्दभावनायामपि पुरुषप्रवृत्तिरूपस्य भवितुः प्रयोजकव्यापारत्वात् लक्षणसङ्गतिः। ननु (१०७) ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र यागेन स्वर्गं भावयेदित्यर्थवर्णने ज्योतिष्टोमपदस्य कथमन्वय इति

---

प्रवृत्त्यनुकूलव्यापाररूपत्वात्, स्वभाव्यायाः पुरुषप्रवृत्तेर्विषयस्य यागादेरित्यर्थः, कर्म-धारयसमासात् पुंवद्भावः। ननु शिशुर्गच्छति क्रीडति हसतीत्यादौ पुरुषार्थभाव्य-कत्वाभावे कथं प्रवर्त्तनात्वमित्याह लडादीति।

(१०५) किं भावनात्वमिति शिष्यजिज्ञासायां भावनां निरूपयति भावनात्व-मिति।

(१०६) प्रयोजकव्यापारत्वमिति। प्रयोजकस्य स्वर्गादिकामपुरुषस्य व्यापारत्वं व्यापारविशेषत्वमित्यर्थः। तथाचार्थसंग्रहे 'भावनानाम भवितुर्भावनानुकूलो भावयितु-र्व्यापारविशेषः' इति। विशेषत्वञ्च प्रयोजनेच्छाजनितत्वे सति क्रियाविशेष्यकत्वं प्रवृत्तिजनकत्वे सति शब्दनिष्ठत्वमेतयोरन्यतरत्वं। तेन यागादीनां प्रयोजकव्यापारत्वेऽपि न तत्रातिव्याप्तिरिति।

(१०७) ज्योतिष्टोमादीनां नामत्वं निरूपयितुं पृच्छति नन्विति। भावनेति-

चेन्न, भावनाकरणत्वेनाभिमतयागनामत्वेनान्वयात्—ज्योतिष्टोमनामकेन यागेनेति। कथं तन्नामत्वमिति चेन्न, ज्योतिराख्यास्त्रिवृदादिस्तोमा अस्मिन् सन्तीति व्युत्पत्त्या यागनामत्वात्। यागस्य त्रिवृदादिस्तोमसम्बन्धः केनावगम्यत इति चेन्न, त्रिवृत् पञ्चदशः सप्तदश एतस्य स्तोमा इति वाक्यान्तरेण एतच्छब्दार्थस्य (१०८) तत्सम्बन्धावगमात्। एवं शास्त्रोक्तैस्तत्प्रख्यादिभिर्हेतुभिस्तत्र तत्र नामत्वं बोध्यम्। शास्त्रे हि तत्प्रख्यातद्व्यपदेशयौगिकवाक्यभेदैश्चतुर्भिर्नामत्वं प्रतिपादितम्। तथाहि—'अग्निहोत्रं जुहोति' इत्यत्र अग्निहोत्रशब्देन अग्निदेवतारूपो गुणो न विधीयते। 'अग्निर्ज्योतिर्ज्योतिरग्निः (१०९) स्वाहेति' सायं जुहोतीतिवाक्यविहितेन

भावनाकरणत्वेनाभिमतो यो यागस्तन्नामत्वेनान्वयादित्यर्थः। व्युत्पत्त्येति वक्ष्यमाणयौगिकरूपनामधेयनिमित्तेनेत्यर्थः।

(१०८) एतदिति। एतच्छब्दार्थस्य एतच्छब्दप्रतिपाद्यस्य यागस्य तत्सम्बन्धावगमात् स्तोमसम्बन्धावगमादित्यर्थः। स्तोमो वेदोक्तसंज्ञाविशेषः। शास्त्रोक्तनामधेयनिमित्तं दर्शयति शास्त्रे हीति। उक्तमेवोदाहरणमाह तथाहीति। देवतायाः प्राप्तत्वादिति प्राप्तस्य विधानासम्भवादिति भावः।

(१०९) ननु अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोतीतिवाक्यस्थमन्त्रेण सायंहोमेऽग्निदेवतायाः प्राप्तत्वात् अग्निदेवताविधिस्तत्र मा भवतु प्रातर्होमे प्रापकशास्त्राभावात्तत्राग्निदेवताप्रापकमग्निहोत्रपदमस्तु नैवं प्रातर्होमेऽपि सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातर्जुहोतीति श्रुतिप्रतिपादितमन्त्रे यत् सूर्याय च प्रजापतये च प्रातर्जुहोतीति विधिवाक्ये च देवतान्तरावगमात् तदवरुद्धे प्रातर्होमे देवताकाङ्क्षाविरहेणाग्नेर्देवतात्वविधानासम्भवात्। न चाग्नौ होत्रमिति सप्तमी समासमा-

मन्त्रेण देवतायाः प्राप्तत्वात्। किन्तु अग्निप्रख्यापकमग्नि-प्रापकं यच्छास्त्रान्तरम्—'अग्निर्ज्योतिर्ज्योतिरग्नि'रित्यादिकम्, तेन प्राप्तमग्निसम्बन्धं निमित्तीकृत्य अग्नये होत्रं होमोऽस्मिन्निति बहुव्रीहिणा अग्निहोत्रपदस्य होमनामधेयत्वम्। न च होमस्य प्रत्ययवाच्यायामर्थभावनायां करणत्वात् तन्नामत्वे अग्निहोत्रेणेति तृतीया स्यात् ज्योतिष्टोमेनेतिवदिति वाच्यम्। द्वितीयाया एव लक्षणया करणार्थकत्वात्, नासाधितं करण-मितिन्यायेन असाधितस्य करणत्वायोगात्। अर्थात् प्राप्त-होमगतसाध्यत्वानुवादकत्वेन वा द्वितीयोपपत्तेरिति तत् प्रख्यन्यायेनात्र नामत्वम्॥ तथा श्येनेनाभिचरन् (११०) यजते-त्यत्र श्येनपदं यागनामधेयम्, न तु यागाङ्गत्वेन श्येन-

---

ग्निर्य होमाधारत्वेनाग्निरूपो गुणो विधेय इति वाच्यं यदाहवनीये जुहोतीत्यनेनैवाग्ने-र्होमाधारत्वस्य प्राप्तत्वात्। तस्मात् अग्निहोत्रमिति कर्मणो नामधेयमेव। तत्प्रख्य-शास्त्रात्। तथा च सिद्धान्तसूत्रं तत्प्रख्यञ्चान्यशास्त्रमिति यतस्तत्प्रख्यं तस्य देवता-रूपगुणस्य प्रकाशकं शास्त्रान्तरमस्ति अतस्तत्र तस्य पुनर्विधाने अनुवादत्वापत्तेरग्निहोत्र-पदं नामधेयमेवेत्यर्थः। तथा च भट्टपादाः—

"विधिनसितगुणप्रापि शास्त्रमन्यत् यतस्त्विह।
तस्मात्तत्प्रापणं व्यर्थमिति नामत्वमिष्यते॥"

एतदेव दर्शयति किन्त्विति। ननु होमस्य अग्निहोत्रमिति कथं नाम भवति इत्यतो बहुव्रीहिणा यौगिकार्थं दर्शयति अग्नये होत्रमित्यादि।

(११०) तद्व्यपदेशरूपद्वितीयनामध्येयनिमित्तस्योदाहरणमाह तथा श्येने-नेति। स चायुक्त इति उपमासम्भवादिति भावः। तथा च उपमा सादृश्यं तच्च 'तद्भिन्नत्वे सति तद्गतधर्मवत्त्वम् श्येनपक्षिरूपगुणः श्येनोपमानेनोपमेयो कर्तुं

पक्षिस्वरूपगुणविधिः, यथा वै श्येनो निपत्यादत्ते एवमेवायं द्विषन्तम्भ्रातृव्यं निपत्यादत्त इत्युपमानोपमेयव्यपदेशानुपपत्तिप्रसङ्गात्। श्येनपक्षी यथा पक्ष्यन्तरं निपत्यादत्ते एवमयमपि श्येननामकः कर्म्मविशेषो भ्रातृव्यं शत्रुं निपत्यादत्ते इति व्यपदेशः कर्म्मनामत्वपक्ष एव युज्यते। यागाङ्गतया श्येनपक्षिविधौ तु स्वस्य स्वेनैव उपमानोपमेयभावः स्यात्, स चायुक्तः; तस्मात् श्येनपदं नामधेयम्। 'ततश्चाभिचरन् शत्रुवधकामः श्येननामकेन यागेन अभिचारभावयेदिति वाक्यार्थः।' (११)—

नन्वेवमभिचारस्यापि वेदोक्तत्वात् आभिचारिके कर्म्मणि आस्तिकानामपि प्रवृत्तिः स्यादिति चेन्न। वेदोक्तोऽप्यभिचारो वेदविहितो न भवति, फलत्वात्। फलं न विधेयं किन्तु फलमुद्दिश्य तत्साधनत्वेन कर्म्मैव विधेयमिति सिद्धान्तात्। अतोऽभिचारस्याविहितत्वेन प्रत्यवायजनकत्वम्।

---

न शक्यते। तद्भिन्नत्वाभावादिति तात्पर्य्यम्। अतः श्येनपदं तद्व्यपदेशात् यागनामधेयम्। तथा च प्रथमाध्याये—'श्येनेनाभिचरन् यजेत' इत्यादिषु श्रुतिषु मन्त्रार्थलक्षणया गुणविधित्वं कर्म्मनामधेयबोधकत्वं वेति संशय्यद्रव्यवाचकशब्दानां कर्म्मणां मन्त्रानुपपत्त्या गुणविधित्वमेवेति पूर्व्वपक्षे तद्व्यपदेशाच्चेति सूत्रेण श्येनादिशब्दानां कर्म्मनामधेयत्वमेव सिद्धान्तितम्। सूत्रार्थस्तु तेन श्येनादिना व्यपदेशः सादृश्यं यस्य कर्म्मणस्तत् तद्व्यपदेशम्। अतः कर्म्म तद्व्यपदेशं श्येनादिसदृशमतः श्येनादिशब्दाः कर्म्मनामधेयानीति।

एवमुद्भिदा (१११) यजेत पशुकाम इत्यत्र पशुरूपफलाय विधित्सितस्य यागस्य उद्भित्पदं नामधेयम्, न तु यथाकथञ्चित्प्राप्तं यागमुद्दिश्य तदङ्गतयोद्भिद्रूपगुणविधिर्दध्यादिवदुद्भिन्नामकस्य गुणस्याप्रसिद्धत्वात् (११२)। यागे तूद्भिद्यते फलमनेनेति योगवशेन वृत्तिसम्भवात् यागनामत्वम्। ननु उद्भिद्यते भूमिरनेनेति योगवशेन खनित्रादावप्युद्भित्पदप्रयोगसम्भवात् खनित्रादिगुणविधिः किन्न स्यादिति चेन्न; एतादृशस्थले गुणविधिः क्वापि वक्तुं न शक्यते, विरुद्धत्रिकद्वयसमावेशाख्यदोषप्रसङ्गात्। तथाहि—(११३) 'उद्भिदा यजेत पशुकाम' इत्यत्र मानान्तरेणाप्राप्तस्य यागस्यानुवादासम्भवात् पशुकर्मक-भावनायां करणत्वेन यागो विधेयः—यागेन पशून् भावयेदिति। ततश्च यागस्य विधेयत्वम्, फलं प्रति शेषतया प्रतीयमानत्वाद्गुणत्वम्, शेषतया अङ्गतयेत्यर्थः, फलसिद्ध्यर्थं पुंसानुष्ठीयमानत्वात् उपादेयत्वमिति विधेयत्वगुणत्वोपादेयत्वात्मकमेकं त्रिकं यागेऽस्ति। तथा यागोद्देशेनोद्भिद्गुणविधौ विधित्सितगुणा-

---

(१११) तृतीयनामधेयनिमित्तोदाहरणमाह एवमिति। विधित्सितस्य विधातुमिष्टस्य यागस्येत्यर्थः।

(११२) अप्रसिद्धत्वादिति। न हि उद्भिन्नाम्ना किञ्चित् द्रव्यं कर्म वा प्रसिद्धमस्ति येन यागः सम्पद्यते अतोऽप्रसिद्धस्य करणत्वासम्भवादित्यर्थः। ननु यद्युद्भिच्छब्दो न किञ्चिद्वस्तु प्रतिपादयति तदा यौगिकरूपेण नामधेयनिमित्तेन कथमुद्भिदो यागनामत्वमतो यौगिकार्थं दर्शयन्नाह यागे त्विति।

(११३) विरुद्धत्रिकद्वयसमावेशाख्यदोषं दर्शयति तथाहीति।

पेक्षया यागस्य प्राधान्यम्, उद्देश्यत्वम्, अनुवाद्यत्वञ्चेति द्वितीयं त्रिकम्, तदिदं त्रिकद्वयं परस्परविरुद्धमेकस्मिन् यागे प्रसज्येत। अतो न गुणविधिः। न च सोमेन यजेतेत्यत्र विरुद्धत्रिकादिकं विनैव सोमशब्दस्य सोमवति यागे लक्षणामङ्गीकृत्य सोमवता यागेनेष्टं भावयेदिति सोमविशिष्टयागविधानाद् यथा सोमरूपगुणविधिः, तद्वदुद्भित्पदस्यापि मत्वर्थलक्षणयाऽऽद्भिद्गुणविशिष्टयागविधिः स्यादेवेति वाच्यम्। सोमादौ गत्यन्तराभावान्मत्वर्थलक्षणया विशिष्टविध्यङ्गीकारात्, उद्भिदादौ तु नामत्वेन गतिसम्भवाद्विशिष्टविध्यङ्गीकारायोगात्। (११४) तस्माद्योगवशादुद्भिदादीनां नामत्वम्। तथा (११५) 'चित्रया यजेत पशुकामः' इत्यत्र चित्रापदं प्राजापत्यनामधेयम्, दधि मधु घृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यमित्यत्र

---

(११४) नामत्वेन गतिसम्भवादिति। ननु सोमेन यजेत इत्यत्रापि नामत्वेन गतिसम्भवात् कथं मत्वर्थलक्षणामङ्गीकुरुषे सोमवता यागेनेष्टं भावयेदिति। नैवं सोमशब्दस्य यौगिकार्थाभावेन यौगिकरूपनामधेयनिमित्तविरहान्न नामत्वं अतोऽगत्या मत्वर्थलक्षणया गुणविशिष्टविधिरिति, उद्भिदा यजेत इत्यत्र तु लक्षणाश्रयणमन्तरेणापि नामत्वेन गतिसम्भवे कथं लक्षणाश्रयणमिति भावः। तदुक्तं मिश्रैः—'विशिष्टविधिपक्षे तु भवेन्मत्वर्थलक्षणा। सोमादौ गत्यभावात् सा नत्वत्र गतिसम्भवात्॥' इति।

(११५) वाक्यभेदात्मकचतुर्थनामधेयनिमित्तोदाहरणमाह तथेति। प्राजापत्यनामधेयं प्राजापत्ययागनामधेयमित्यर्थः। तत्र हेतुमाह दधीत्यादि। संसृष्टं मिलितं तद्वस्तु प्राजापत्यं प्रजापतिदेवमित्यर्थः।

तत्संसृष्टं प्राजापत्यमिति सामानाधिकरण्याद् यो दध्यादि-द्रव्यषट्कप्रजापतिदेवतासम्बन्धः श्रुतः तेनानुमितो यागो विधीयते। विहितस्य यागस्य फलाकाङ्क्षायां चित्रया यजेतेति वाक्यं फलसम्बन्धविधायकम्, तत्र फलार्थत्वेन पुनर्विधिरिति (११६) तस्य प्राजापत्ययागस्य दध्यादिविचित्र-द्रव्यकत्वात् चित्रापदं नामधेयम्। नत्वग्नीषोमीयं (११७) पशुमालभेतेतिवाक्यप्राप्तं पशुयागं यजेतेत्यनूद्य चित्रत्वस्त्रीत्व-रूपगुणद्वयविधानम्, मानान्तरप्राप्तं कर्मोद्दिश्य तत्रानेकगुण-विधाने वाक्यभेदप्रसङ्गात् (११८)। तदुक्तं 'प्राप्ते कर्म्मणि नानेको विधातुं शक्यते गुणः' इति। मानान्तरप्राप्ते कर्म्मणि त्वनेक-

---

(११६) पुनर्विधिरिति। यागघटितपुनर्व्विधिरित्यर्थः। यागस्य चित्रानामकत्वं प्रतिपादयितुं हेतुमाह दध्यादिविचित्रद्रव्यकत्वादिति। नानावर्णविशिष्टपटादेरिव नानाद्रव्यविशिष्टयागस्यापि चित्रापदव्याच्यत्वमुपपद्यत इति भावः।

(११७) एतस्य गुणविधायकत्वं निषेधति न त्विति। चित्राशब्दो विविध-वर्णत्वं स्त्रीत्वञ्च बोधयति विविधवर्णत्वस्य अन्यवस्तुनिष्ठत्वे सम्भवत्यपि स्त्रीत्वस्य प्राणीतर-निष्ठत्वासम्भवादाह अग्निषोमीयं पशुमालभेतेति।

(११८) वाक्यभेदप्रसङ्गादिति। अग्नीषोमीयपशौ चित्रत्वस्त्रीत्वरूपगुणद्वय-विधाने कर्म्मणो मानान्तरप्राप्तत्वात् वाक्यभेदः स्यादित्यर्थः। प्राचीनसम्वादमाह-तदुक्तमिति शास्त्रदीपिकादावित्यर्थः। शास्त्रदीपिकायान्तु अनेन वाक्येनाग्नीषोमीय-पशौ चित्रवर्णत्वस्त्रीत्वे गुणौ विधीयेयातामिति पूर्व्वपक्षे यदि पशौ चित्रत्वस्त्रीत्वे विधीयेते तदा गुणभेदाद्वाक्यभेदः स्यात्। चित्रं पशुमालभेत पशुकामः स्त्रीपशु-मालभेत पशुकाम इति। तथा चोक्तं 'प्राप्ते कर्म्मणि नानेको विधातुं शक्यते गुणः। अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः' इति। तस्मात् चित्रापदस्य प्रकान्तयागनाम-

दैवताष्टाकपालपुरोडाशामावस्यापौर्णमास्याद्यनेकगुणविशिष्टो-द्रव्यदेवतासम्बन्धेनानुमितो यागो विधीयत इति सिद्धान्तात्। तदुक्तम् 'अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः' इति।

अथ यथा पशुना यजेतेत्यत्र मानान्तरप्राप्तं यागमुद्दिश्य तदङ्गतया पशुनेत्येकपदोपात्तानां पशुद्रव्यतद्गतलिङ्गसंख्यारूपाणां त्रयाणां वाक्यभेदं विनैव (११७) विधिरङ्गीकृतः, तद्व(११८)दत्राप्येकपदोपात्तचित्रत्वस्त्रीत्वविशेषितपशुद्रव्यकारकस्य विधानान्न वाक्यभेदः, अतएव तत्र विधेयस्य पशोरुपादेय-

---

त्वमेव चित्रया यजेतेति वाक्येन बोध्यत इति सिद्धान्तितं भाष्यकारादिभिः। यद्यपि चित्रत्वविशिष्टस्त्रीत्वरूपैकमात्रगुणविधानस्यापि सम्भवेन न वाक्यभेदापत्तिस्तथापि तत्र गुणगौरवं प्रकृतहानाप्रकृतप्रक्रिये च प्रसज्येयातामित्यपि शास्त्रदीपिका, ग्रन्थकृताप्यत्र तदेवात्र समाधानमाख्यास्यते। तदेव दर्शयितुं पूर्वपक्षयति अथ यथेति।

(११७) वाक्यभेदं विनैवेति। ननु मानान्तरप्राप्ते कर्म्मणि त्रयाणां वाक्यभेदं विना विधानं कथं सम्भवति 'प्राप्ते कर्म्मणि नानेको विधातुं शक्यते गुण' इति श्लोकविरोधात्। मैवं, प्राप्ते कर्म्मण्यपि यत्र विधेयानां परस्परान्वयसम्भवस्तत्र बहवोऽपि गुणा एकवाक्येन विधातुं शक्यन्ते तत्र तावद्गुणविशिष्टस्यैकस्यैव विधानात् प्रकृतेऽपि सामानाधिकरण्येन पुंस्त्वद्वैकत्वविशिष्टपशोरेकस्यैव विधानान्न कश्चिद्दोष इति। यत्र तु विधेयानां परस्परान्वयासम्भवस्तत्रैवैकवाक्येन ते विधातुं न शक्यन्ते, तथा च श्राद्धविवेकटीकायां 'विधेययोः परस्परानन्वितत्वेनैकवाक्या-सम्भवात्' इत्युक्तमिति।

(११८) तद्वदिति। सामानाधिकरण्येन चित्रत्वविशिष्ट-स्त्रीत्वविशिष्ट पशु-द्रव्यकारकस्य एकस्य विधानात्तद्वदित्यर्थः। अतएव पशोर्मानान्तराप्राप्तत्वादेव-

त्वात् तद्गतमेकत्वं यज्ञाङ्गतया विवक्षितमित्येकेनैव पशुना यष्टव्यम्। ग्रहं सम्मार्ष्टीत्यत्र उद्देश्यगतत्वादेकत्वमविवक्षित-मिति सिद्धान्तप्रवादः कथम्? ग्रहं सम्मार्ष्टीत्यत्र ग्रहमिति द्वितीयया ग्रहस्येप्सिततमत्वेनोद्देश्यत्वात् प्रयोजनवत्त्वाच्च प्राधान्यं गम्यते। संमार्गस्तु ग्रहं प्रति गुणभूतः 'प्रतिप्रधानं गुण आवर्त्तनीयः' इति न्यायाद् यावन्तो ग्रहास्तेषां सर्वेषां संमार्ग इति निश्चये सति कति ग्रहाः सम्मार्जनीयाः? इति बुभुत्साया अभावादुद्देश्यगतमेकत्वं श्रूयमाणमप्यविवक्षितम्। यद्यु-च्येत (११९)—नेदमुद्देश्यगतं किन्तु स्वयं विधेयम्, ग्रहं संमृज्यात् तच्चैकमिति। तथासति विधेयभेदाद्वाक्यभेदः स्यात्। तथा बुभुत्साया अभावात् विधानायोगाच्चोद्देश्यगता सङ्ख्या न विवक्षिता। उद्देश्यगतमपि (१२०) विशेषणं किञ्चिद्विवक्षितम्, यस्य विशेषणस्य विवक्षां विना उद्देश्य-प्रतीतिर्न पर्यवस्यति, यथा तत्रैव ग्रहत्वं विवक्षितम्, तद्विवक्षा

---

त्यर्थः। विवक्षाफलमाह एकेनैवेति द्वाभ्यां यागो न शास्त्रार्थ इति भावः। उद्देश्यगत-त्वादिति। ग्रहैर्जुहोतीत्यनेन प्राप्तत्वादित्यर्थः। सिद्धान्तप्रवादः तन्नामा ग्रन्थः स अविवक्षितमित्याहेत्यर्थः। उद्देश्यगतविशेषणस्याविवक्षितत्वे किं प्रमाणमित्या-काङ्क्षायां पृच्छति कथमिति।

(११९) ननु सम्मार्गवदेकत्वमपि विधीयतां तस्य प्रमाणान्तराप्राप्तत्वादिति तन्नि-राकरोति यद्युच्येत इति।

(१२०) नन्वेवं ग्रहत्वमपि उद्देश्यगतविशेषणं तदप्यविवक्षितमस्तु इत्यत आह उद्देश्यगतमपीति।

विना उद्देश्यस्वरूपस्य ज्ञातुमशक्यत्वात्। तेन (१२१) ग्रह जातीयसाधनकसोमयागापूर्वार्थत्वाच्चमसेषु न संमार्ग इति स्थितम्। 'पशुना यजेते'त्यत्र यागं प्रति पशुर्विधेयत्वाद् गुणभूतः प्रतिगुणं प्रधानावृत्तिर्नास्तीति कियता पशुना यागः कर्त्तव्यः? इत्याकाङ्क्षायामेकवचनेन प्रतीयमानं विधेयगतमेकत्वं विवक्षितम्, बभुक्षितत्वात्! किञ्च (१२२) लिङ्गसङ्ख्याविशेषितस्य पशुद्रव्यरूपकारकस्य एकपदोपात्तस्य विधेयत्वाद्विधेयपशुद्वारा तद्गतलिङ्गसङ्ख्ययोरपि क्रियाङ्गत्वादेकत्वं विवक्षितम्। अथवा तृतीयाविभक्त्यभिहितयोर्लिङ्गसंख्ययोर्विभक्त्यभिहितया करणकारकशक्त्या आत्मसात्कृतयोः प्रातिपदिकार्थपशुद्रव्येण सम्बन्धमनादृत्य तद्वदेव साक्षात् क्रियाङ्गत्वेन विधाने सति पश्चादरुणैकहायनीन्यायेन परस्परमन्वयः यागाङ्गत्वेन विहितो यः पशुः स एकः पुमांश्चेति। यथा— अरुणया पिङ्गाक्ष्या एकहायन्या गवा सोमं क्रीणातीत्यत्र कारकाणां क्रियान्वयनियमात् करणविभक्तिभिरारुण्यपिङ्गाक्षीत्वादीनां चतुर्णां परस्परमनन्वितानामेव सोमक्रयणाङ्गत्वेन अन्वये सति आरुण्यादेर्गुणस्यामूर्त्तस्य स्वतः क्रियासाधनत्वा-

(१२१) विवक्षाफलमाह तेनेति।

(१२२) ननु प्रतिगुणं प्रधानावृत्तिर्नास्तीत्युक्तं ग्रहं संमार्ष्टीति वाक्यप्राप्तसम्मार्गस्यापि गुणत्वावृत्तौ प्रधानस्य ग्रहस्यावृत्तिर्नास्तीति कियन्तो ग्रहाः सम्मार्जनीया इत्याकाङ्क्षायामेकवचनेन प्रतीयमानम् उद्देश्यग्रहगतमेकत्वमपि विवक्षितमस्तु इत्यत आह किञ्चेति।

योगात् क्रियासाधनैकहायनीगोपरिच्छेदकत्वेन पश्चात् परस्परं पार्ष्णिकान्वयः—या एकहायनी गौः सा पिङ्गाक्षी अरुणेति, तद्वत्। तदेवमुद्देश्यगतं विशेषणमविवक्षितम्, उपादेयगतं विवक्षितमिति स्थितम्। एवञ्च चित्रापदेन चित्रत्वस्त्रीत्वोभयविशेषितपशुकारकस्य यजेतेति पदानूदितेऽग्नीषोमीयपशुयागे विधातुं शक्यत्वात् कथं नामत्वमिति चेन्न, तथासति प्रकृतस्य प्राजापत्ययागस्य फलसम्बन्धाकाङ्क्षस्य हानमप्रकृतस्याग्नीषोमीययागस्य कल्पना च स्यात्। तद् द्वयमयुक्तम्। तस्माच्चित्रापदं कर्मनामधेयम्। एवं तत्प्रख्यादीनामन्यतमेन सर्वत्र कर्मनामत्वमूह्यम्। इत्थं विधिवाक्यस्य प्रामाण्यं विचारितम्। अर्थवादानान्तु (१२३) स्वार्थपरत्वे प्रयोजनाभावादध्ययनविधिवशेन फलवदर्थज्ञानार्थत्वस्यावश्यकत्वाद्विधेयगतप्राशस्त्यप्रतिपादनद्वारा विधिवाक्यैकवाक्यतया प्रामाण्यम्। स चतुर्विधः—निन्दा-प्रशंसा-परकृतिपुराकल्पभेदात्। तत्र (१२४) निन्दार्थवादो यथा—'असत्रं वा एतद् यदच्छन्दो-

---

(१२३) विधिं निरूप्य अर्थवादान्निरूपयितुमुपक्रमते अर्थवादानान्त्विति। स्वार्थपरत्वे स्वस्य मुख्यार्थपरत्वे। प्रयोजनाभावादिति तत्तद्विधिवाक्यैरेव तत्तदर्थावगमादिति भावः। नन्वानर्थक्यमेवास्तु काद्यानिरत आह अध्ययनविधिवशेनेति। 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिवशेनेत्यर्थः। तथा च 'स्वाध्यायोऽध्येतव्यः' इति विधेः प्रयोजनवदर्थज्ञानरूपदृष्टार्थत्वेन व्यवस्थापनादिति भावः। विधेयेति लक्षणया विधेयगतप्राशस्त्यप्रतिपादनद्वारेत्यर्थः। अर्थवादं चतुर्धा विभजते स चतुर्विध इति।

(१२४) क्रमेणोदाहरणमाह तत्रेति। असत्रमिति अत्र नञोऽप्राशस्त्यपरत्वं

मसित्यादिः' 'अश्रुजं हि रजतं यो वर्हिषि ददाति पुरास्य सम्वत्सराद् गृहे रुदन्तीत्यादिश्च'। प्रशंसार्थवादो यथा— 'शोभतेऽस्य मुखं य एवं वेदेत्यादिः' 'वायुर्वै क्षेपिष्ठा (१२५) देवतेत्येवमादिश्च'। परेणेदं महता पुरुषेण कर्म्म कृतमिति प्रतिपादकोऽर्थवादः परकृतिः, यथा—'अग्निर्वा (१२६) अकामयतेत्यादिः'। परप्रवक्तृकार्य्यादिप्रतिपादकोऽर्थवादः पुराकल्पः, यथा—'तमशपद् धिया धिया त्वा वाध्यासुरित्यादिः'। तत्र (१२७) निन्दार्थवादस्य विधेयान्यनिन्दाद्वारा विधेयप्राशस्त्यपरत्वम्, अश्रुजमित्यादिरजतनिन्दाद्वारा विधेय-

---

रुन्दोनशब्देन स्तोम उच्यते। गेयमन्त्रविशेषस्तोमः यत्र सप्त छन्दांसि स्तोमरहितमप्रसक्तत्वमित्यर्थः। गृहे रुदन्तीति पाठो लिपिप्रमादादवगन्तव्यः। प्रामाणिकैरुद्धृतपाठस्तु वर्हिषि रजतं न देयमिति निषेधोपक्रमे यो वर्हिषि रजतं ददाति पुरास्य संवत्सरात् गृहे रोदनं भवतीति तदा सुगमम्।

(१२५) वायुर्वै इति। समग्रा श्रुतिस्तु 'वायव्यं श्वेतमालभेत भूतिकामः। वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एनं भूतिं गमयति।' इति, अस्यार्थः वायुः क्षेपिष्ठा क्षिप्रगामिनी देवता अतः स्वेन स्वोद्देश्यकेन भागधेयेन यज्ञभागेन वायुमेव धावति सम्बन्धयति स वायुः एनं यागकर्त्तारं भूतिं गमयति प्रापयतीत्यर्थः।

(१२६) अग्निर्वेति। वाकारोऽप्यर्थे अग्निदेवतं यागं अग्निरपि अकामयतेत्यर्थः। अनेनार्थवादेन अग्निना महता कृतत्वप्रतिपादनात् परकृतिनामार्थवादोऽयं। तमशपदिति धिया धिया तमशपदिति परवक्तृत्वप्रतिपादनात् पुराकल्पोऽयमर्थवादः।

(१२७) सर्व्वेषां विधेयगतप्राशस्त्यपरत्वं दर्शयति तत्रेति।

भूतरजतदाननिषेधप्राशस्त्यपरत्वे विरोधाभावात्। इतरेषां त्रयाणां साक्षात् प्राशस्त्यपरत्वमेव। वायुर्वा इत्यर्थवादस्य वायुः क्षिप्रगामित्वादतीवप्रशस्तदेवता, अतस्तद्दैवत्यं कर्म प्रशस्तमिति विधेयदेवतागतप्राशस्त्यप्रतिपादनद्वारा विध्येकवाक्यत्वम्। अग्निर्वा अकामयतेत्यस्य अग्निदैवत्यो यागः पूर्वकाले अग्निना कृतत्वात् प्रशस्तः, अत आधिक्यादिदानीमप्यन्यैर्यजमानैरवश्यं कर्त्तव्य इति विधेयकर्म्मगतप्राशस्त्यप्रतिपादनद्वारा विध्येकवाक्यत्वम्। एवमन्यत्राप्यूह्यम्। क्वचित् (१२८) कार्य्यान्तरमप्यस्ति यथा—'अक्ताः शर्करा उपदधातीति-विधावक्ता इतिपदेन द्रवद्रव्यसामान्यं प्रतीयते, तच्च द्रवद्रव्यं किमिति सन्देहे 'तेजो वै घृतमित्यर्थवादात् घृतमिति निश्चीयत—इति तेजो वै घृतमित्यर्थवादस्य सन्दिग्धार्थनिर्णायकत्वेनापि प्रामाण्यम्। मन्त्राणा-(१२९)मप्यध्ययनविधानात् कृतस्य स्वाध्यायस्य फलवदर्थज्ञानार्थत्वमेव, नत्वदृष्टार्थत्वम्, दृष्टे

---

(१२८) क्वचिदिति। कार्य्यान्तरं सन्दिग्धार्थनिर्णायकत्वरूपं तदपि अर्थवादानां प्रयोजनमिति शेषः।

(१२९) मन्त्राणामपीति। वेदो द्विविधः मन्त्ररूपो ब्राह्मणरूपश्चेति पूर्व्वमुक्तं, तत्र ब्राह्मणरूपं वेदं प्रतिपाद्य मन्त्ररूपं प्रतिपादयितुमाह मन्त्राणामपीति। यत्राभियुक्तानां मन्त्रोऽयमिति समाख्यानं स मन्त्रः। तदुक्तं पार्थसारथिमिश्रैः—'अभियुक्तप्रसिद्ध्या हि मन्त्रत्वमवकल्पते। स्वाध्यायकाले तेषाञ्च समाम्नातेषु मन्त्रधीः॥ मन्त्रानध्यापयामीऽयं तथा मन्त्रानधीमहे। मन्त्रस्थानबहिर्भूत ऊहादौ नास्ति मन्त्रधीः॥'

सम्भवत्यदृष्ट-(१३०)कल्पनायोगात्। प्रयोगकाले कर्मज्ञानं विना कर्मानुष्ठानायोगात् कर्मोपयिकमर्थज्ञानं मन्त्रैः क्रियते। न चोपदेष्टृवचनादिनाप्यर्थस्मरण-सम्भवादनुष्ठानोपपत्तिरिति वाच्यम्। मन्त्रैरेवार्थं स्मृत्वानुष्ठाने सति फलं भवति नान्यथेति नियमाङ्गीकारात्, नियमेनादृष्टस्याङ्गीकारात् तदभावे तज्जन्यादृष्टलोपे तन्मूलं न सिध्यतीति कल्पनात्।

नन्वेवं मन्त्राणां स्वस्वप्रकाश्येऽर्थे विनियोग इति फलितम्, विनियोगो नाम शेषत्वेनान्वयः, शेषत्वं नामाङ्गत्वम्, ततश्च 'इमामगृभ्णन् रशना'मितिमन्त्रस्य रशनाग्रहणसामर्थ्यमस्तीति रशनाग्रहणप्रकाशनसामर्थ्यरूपात् लिङ्गादेव रशनाग्रहणाङ्गत्वोपपत्तेः 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इति वचनं किमर्थमिति चेन्न, परिसंख्यार्थत्वात्। चयनप्रकरणे अश्वरशनाग्रहणं गर्दभरशनाग्रहणञ्चेति द्वयमस्ति, तत्र लिङ्गादश्वरशनायां मन्त्रप्राप्तावुच्यमानायां लिङ्गाविशेषाद्गर्दभरशनाया-

---

(१३०) दृष्टे सम्भवतीति। सम्भवतीत्युक्तेः येषां हुं फडादिमन्त्राणां प्रयोगार्थस्मारकत्वरूपं दृष्टफलं न दृश्यते तेषामदृष्टकल्पनमपि तदुक्तं 'यस्य दृष्टं न लभ्येत तस्यादृष्टकल्पन'मिति। अन्यदत्र सुगमम्। दोषत्रयदुष्टायाः परिसंख्याया अगत्याङ्गीकारे अष्टदोषदुष्टो विकल्पः सुतरामेवागत्याङ्गीकरणीयस्तथाप्यष्टौ दोषान् विकल्पोदाहरणञ्च दर्शयितुं प्रसङ्गादुपक्रमते एवमिति। नन्वतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोड़शिनं गृह्णातीत्यादौ गत्यन्तराभावाद्विकल्पोऽस्तु, व्रीहिभिर्यजेत इत्यादौ तु समुच्चयरूपगतिसम्भवात् कथं विकल्पः? मैवं यद्यत्र व्रीहियवाभ्यां समुच्चिताभ्यां यागानुष्ठानं शास्त्रार्थस्तदा व्रीहियवाभ्यां यजेतेत्येकेनैव विधिनोप

मपि मन्त्रः प्राप्नुयादतोऽश्वरशनायामेव मन्त्रः कार्य्यः न गर्दभरशनायामिति मन्त्रनिवृत्तिरूपपरिसङ्ख्यार्थोऽयं विधिः।

सा च परिसङ्ख्या त्रिदोषा—स्वार्थत्यागः परार्थस्वीकारः प्राप्तबाधश्चेति त्रयो दोषाः। तत्र अश्वाभिधानीमादत्त इति वाक्ये अनेन मन्त्रेणाश्वरशनादानं कुर्यादिति स्वार्थः, स च त्यक्तः; गर्दभरशनातो मन्त्रनिवृत्तिः परार्थः, स च स्वीकृतः, गर्दभरशनायामपि लिङ्गात् प्राप्तस्य मन्त्रस्य अनेन बाधश्चेति त्रिदोषा परिसङ्ख्या गत्यभावादङ्गीकृता, गत्यन्तरे सति सा न युक्ता। एवमष्टदोषदुष्टविकल्पोऽप्यगतिकोऽङ्गीकृतः। यथा आग्नेयोऽष्टकपालसंस्कृतः पुरोडाशो यागाङ्गत्वेनावगतः। तत्र अपूपविशेषस्य पुरोडाशस्य प्रकृतिद्रव्याकाङ्क्षायामनियमेन यस्य कस्यचिद्द्रव्यस्य प्राप्तौ व्रीहिभिर्यजेतेतिवाक्याद् व्रीहयो नियम्यन्ते, एवं यवैर्यजेतेतिवाक्याद्यवा अपि नियम्यन्ते, तयोरेकार्थत्वाद्विकल्पः। एवम् 'अतिरात्रे षोडशिनं गृह्णातीति अतिरात्रे षोडशिग्रहणं विहितम्, तथा नातिरात्रे षोडशिनं गृह्णातीति प्रतिषेधात् ग्रहणाभावो विहितः' तयोर्ग्रहणाग्रहणयोः परस्परविरुद्धयोरेकस्मिन् प्रयोगे अनुष्ठातुमशक्यत्वात्

---

पत्तौ व्रीहिभिर्यजेत यवैर्यजेतेति यजिश्रातुद्वयोपादानं व्यर्थं तस्मादेव समुच्चयाभावेऽगत्याष्टदोषदुष्टस्यापि विकल्पस्य स्वीकार्य्यत्वात्। तथा चोक्तम्—'एवमिष्टोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः। विकल्प आश्रितस्तत्र गतिरन्या न विद्यते॥' 'ते चाष्टौ दोषाः प्रमाणत्वाप्रमाणत्वपरित्यागप्रकल्पना तदुज्जीवनहानाभ्यां विकल्पे त्वष्टदोषता॥' इत्यनेनाभिहितास्तान् दर्शयति तथाहीति।

क्वचित् प्रयोगे ग्रहणानुष्ठानं प्रयोगान्तरे तदभावानुष्ठानमिति तत्रापि विकल्पः। स चाष्टदोषदुष्टः। तथाहि—पूर्व्वं व्रीहि-प्रयोगे यवशास्त्रस्य स्वार्थानुष्ठापकत्वलक्षणप्रामाण्यपरित्यागः, अननुष्ठापकत्वलक्षणाप्रामाण्यस्वीकारः, ततो द्वितीयप्रयोगे यवानुष्ठाने यवशास्त्रस्य पूर्वं त्यक्तं यत् प्रामाण्यं तत्स्वीकारः, स्वीकृतं यदप्रामाण्यं तत्परित्यागश्चेति यवशास्त्रे चत्वारो दोषाः। एवं पूर्व्वं यवप्रयोगे व्रीहिशास्त्रस्य स्वार्थानुष्ठापकत्व-लक्षणं यत् प्रामाण्यं तत्परित्यागः, अननुष्ठापकत्वलक्षणं यदप्रामाण्यं तत्स्वीकारः, पुनर्द्वितीयप्रयोगे व्रीह्यनुष्ठाने व्रीहि-शास्त्रस्य त्यक्तप्रामाण्यस्वीकारः, स्वीकृतप्रामाण्यपरित्यागश्चेति व्रीहिशास्त्रे चत्वारो दोषाः इत्यष्टदोषदुष्टोविकल्पः, क्वचिदेकार्थ-त्वात् एककार्य्यकारित्वादित्यर्थः; यथा (१३२) व्रीह्यादौ। तत्र व्रीहियवयोरेकैकस्य पुरोडाशनिष्पादनक्षमत्वाद्विकल्पः। क्वचित् वचनबलात्; यथा 'बृहत्पृष्ठं भवतीति बृहत्सामसाध्यं पृष्ठनामकं स्तोत्रं विहितं, 'रथन्तरं पृष्ठम्भवतीति रथन्तरसाम-

(१३२) यथेति। विकल्पः क्वचिदेकार्थत्वात् क्वचित् वचनबलाच्च भवति। एकार्थ-त्वात् व्रीहियवयोर्विकल्पं दर्शयित्वा वचनबलात् विकल्पं प्रतिपादयति यथेति। 'बृहत् पृष्ठं भवति रथान्तरं पृष्ठं भवती'ति श्रुतिद्वयविहितयोः पृष्ठनामकस्तोत्रयोः बृहद्वा पृष्ठं कार्य्यं रथान्तरं वा पृष्ठं कार्य्यमिति वचनबलादेव विकल्प इत्यर्थः। न चात्र शक्ताशक्त-भेदेन व्यवस्थितविकल्प इति वाच्यं एतयोरनुष्ठानकष्टसाम्येन व्यवस्थितविकल्पा-सम्भवात्, न वा फलाधिक्यकल्पनया व्यवस्थितविकल्पः फलाधिक्यकल्पने प्रमाणा-भा॰ात् तस्मादगत्याष्टदोषदुष्टोऽपि विकल्प एवैहिक इति भावः।

साध्यं पृष्ठस्तोत्रान्तरं विधीयते। स्तोत्रञ्च प्रयाजादिवद्-पूर्वार्थत्वादर्थकर्म्म, साम तु संस्कारकर्म्मत्वाद्गुणकर्म्म, स्तोत्र-साधनीभूतस्तोत्रीयाचराभिव्यक्तिरूपसंस्कारद्वारा साम्नां स्तोत्र-साधनत्वाङ्गीकारात्। प्रगीतमन्त्रसाध्यमिन्द्रादिगुणिनिष्ठगुणा-भिधानं स्तोत्रं। प्रगीतमन्त्रसाध्यं सामाभिव्यक्त-ऋगक्षरसाध्य-मित्यर्थः। अप्रगीतमन्त्रसाध्यं गुणिनिष्ठगुणाभिधानं शास्त्रम्। गानक्रियाविशेषः साम, स्तोत्रसाधनीभूता ऋचः स्तोत्रीयाः, तद्गतत्रिवृत्पञ्चदशत्वादिसङ्ख्याविशेषः स्तोमः—इत्येषां भेदः। तथाच—बृहद्रथन्तरपृष्ठयोर्भिन्नापूर्व्वार्थत्वेन एकार्थत्वाभावेऽपि 'बृहद्वा पृष्ठं कार्यं, रथन्तरं वा पृष्ठं कार्य्य'मिति वचनबलादेव विकल्पः। क्वचिद्व्यवस्थितविकल्पः, यथा (१२३) द्वितीयप्रयाज-कर्म्मणि नाराशंसतनूनपान्मन्त्रयोरेकार्थत्वाद्विकल्पः। स च राजन्यवाशिष्ठानीनां (१२४) नाराशंसो द्वितीयप्रयाजस्तनून-पादन्येषामितिवाक्यात् व्यवस्थित इति व्यवस्थितद्विकल्पः। तदेवं चोदनाऽपरपर्य्यायाणां विधिवाक्यानामंशत्रयविशिष्टभावना-विधायकत्वात् प्रामाण्यम्। उद्भिदादीनां नामतया अर्थवादानां विधेयप्राशस्त्यपरतया मन्त्राणामनुष्ठेयार्थस्मारकतया प्रामाण्य-मिति कृत्स्नस्य वेदस्यालौकिके धर्म्माधर्म्माख्येऽर्थे प्रामाण्यं-

---

(१२३) वचनबलात् क्वचित् व्यवस्थितविकल्पोऽपि भवतीति दर्शयति यथेति।

(१२४) वाशिष्ठादीनामित्यादिपदेन काण्वादिपरिग्रहः. नाराशंसो नाराशंसपद-घटितमन्त्रसाध्य इत्यर्थः। एवमुत्तरत्रापि।

स्थितम्। स्मृतयोऽपि मन्वादिप्रणीता वेदमूलकत्वादष्टकादौ धर्म्मे प्रमाणम्। 'औदुम्बरी सर्व्वा वेष्टयितव्ये'ति स्मृतिरप्रमाणम्, 'औदुम्बरीं स्पृष्ट्वोद्गायेदि'ति प्रत्यक्षश्रुतिविरुद्धत्वात्। सर्व्ववेष्टने सति श्रुत्युक्तस्पर्शनस्य कर्त्तुमशक्यत्वात्। वैसर्जनहोमीयं वासोऽध्वर्य्युर्गृह्णातीति स्मृतिरप्यप्रमाणम्, श्रुत्यविरुद्धत्वेऽपि लोभमूलकत्वात्। तथा शिष्टाचारोऽपि स्मृतिद्वारा श्रुतिमूलकत्वात् प्रमाणम्। मातुलसुतापरिणयनादिशिष्टाचारस्त्वप्रमाणम्, 'मातुलस्य सुतामूढ्वे'त्यादिस्मृत्या निषिद्धत्वेन श्रुतिविरुद्धत्वात्। तदेवं श्रुतिस्मृत्याचाराणां धर्म्माधर्म्मयोः प्रामाण्यमुक्तम्। स च (१२५) धर्म्मः परस्परं भिन्नः। भेदकप्रमाणानि तु शब्दान्तरादीनि (१२६)। तथाहि—यागदानहोमानां यजति-ददाति जुहोतीत्यपरपर्य्यायशब्दप्रतिपाद्यत्वाच्छब्दान्तराद्भेदः। स्व-स्वत्वनिवृत्तिपूर्व्वकपरस्वत्वापादनं दानम्। समिधो यजती-त्यादीनां पञ्चानां वाक्यानां मध्ये एकस्य कर्म्मविधायकत्व-मन्येषां तस्मिन् कर्म्मणि गुणविधायकत्वमित्यत्र नियामका-भावात्सर्व्वेषां कर्म्मविधायकत्वे स्थिते विहितस्य कर्म्मणः पुन-

---

(१२५) धर्म्मं निरूप्य तस्य परस्परभेदं दर्शयति स चेति।

(१२६) शब्दान्तरादीनीति आदिपदादभ्याससंख्यासंज्ञागुणनामधेयप्रकरणान्तराणां ग्रहणं। एषां क्रमेणोदाहरणमाह तथाहीति। यागहोमयोः प्रसङ्गात् पूर्व्वं लक्षणमुक्तं दानस्यानुक्तत्वात् किं दानमिति शिष्याकाङ्क्षायां दानलक्षणमाह स्वस्वत्वेति। अभ्यासात् धर्म्मभेदमाह समिधो यजतीति। एवमन्यदपि क्रमेण बोध्यमिति।

र्व्विधानं व्यर्थमिति पुनर्विधानसामर्थ्यात् पूर्ववाक्यविहितकर्म्मा-पेक्षयोत्तरवाक्यविहितस्य कर्म्मणो भेदः सिध्यतीत्येतादृशस्थले-ष्वविशेषःपुनः श्रुतिरूपाद्यजतिपदाभ्यासात कर्म्मभेदः। तिस्र-श्राहुतीर्जुहोतीत्यत्र जुहोतिपदाभ्यासाभावेऽपि जुहोत्यर्थे होमे त्रित्वसङ्ख्यान्वयात्परस्परभिन्नास्त्रयो होमा इति सङ्ख्यया कर्म्म-भेदः। अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेतेति ज्योतिष्टोमप्रकरणे श्रुतानामपि ज्योतिराख्यानां त्रयाणां यागानां ज्योतिष्टोमसंज्ञापेक्षया पृथक्संज्ञात्रयकरणात् ज्योतिष्टोमापेक्षया भेदः, भिन्नसंज्ञा-वशादेव त्रयाणां परस्परं भेद इति संज्ञया कर्म्मभेदः। तथा तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन-मित्यत्र सा वैश्वदेवीतिवाक्ये विश्वेदेवदेवतामिक्षाद्रव्यसम्बन्धा-नुमितो यागो विधीयते। वाजिभ्यो वाजिनमित्यत्रापि वाजिदेवत्यवाजिनद्रव्यक-कर्म्मान्तरं विधीयते। ननु पूर्वविहिते वैश्वदेवयागे वाजिनद्रव्यरूपगुणो विधीयते, पूर्वयागस्यामिक्षा-गुणावरुद्धत्वेन तत्र वाजिनस्य निवेशायोगात्। न च व्रीहि-यववद्विकल्पः। वाजिनामिक्षयोः समशिष्टत्वाभावात्, विषम-शिष्टयोर्विकल्पायोगात्। वैश्वदेवयागोत्पत्तिवाक्य एवामिक्षा-गुणः शिष्यत इति उत्पत्तिशिष्टः, शिष्यते विधीयत इत्यर्थः, वैश्वदेववाक्यादुत्पन्ने कर्म्मणि वाक्यान्तरेण शिष्टो विहितो-वाजिनगुण उत्पन्नशिष्टः। तयोर्मध्ये ह्युत्पत्तिशिष्टः प्रबलः, कर्म्मोत्पत्तिवेलायामेव कर्माङ्गत्वेन प्राप्तत्वात्, उत्पन्नशिष्टो

वाजिनगुणोऽनन्तरप्रमितोऽपि विलम्बितत्वेन दुर्बलत्वात्, तत्पूर्व्वकर्म्मणि निवेशमलभमानो वाजिरूपदेवतान्तरसम्बन्धात् स्ववाक्यस्य कर्मान्तरविधायकत्वमानयतीति गुणात् भेदः। तत् घनीभूतं पय आमिक्षा, शिष्टं जलं वाजिनम्। तथा कुण्डपायिनामयने श्रूयते—'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोती'ति। अत्र पूर्वकर्म्म किञ्चिदपि सन्निहितं न भवति, अपूर्वकर्म्मसन्निधानरूपात् प्रकरणान्तरात् प्रसिद्धाग्निहोत्रधर्म्मकं तन्नामकं कर्मान्तरं विधीयते। न त्वग्निहोत्रशब्देन प्रसिद्धाग्निहोत्रमनूद्य गुणविधिः, प्राप्ते कर्म्मणि आनन्तर्य्यमासरूपानेकगुणविधौ वाक्यभेदापत्तेरिति प्रकरणान्तरात् तत्कर्म्मभेदः। प्रसिद्धाग्निहोत्रं नैयमिकाग्निहोत्रं नित्याग्निहोत्रमिति यावत्। तदेवं शब्दान्तराभ्यास-सङ्ख्या-संज्ञा-गुण-नामधेय-प्रकरणान्तरैः कर्म्मभेदो दर्शितः।

तत्र (१२७) वेदादिप्रमेयोऽर्थस्त्रिविधः—क्रत्वर्थः पुरुषार्थः उभयार्थश्चेति। प्रयाजादिः क्रत्वर्थः। फलं तत्करणञ्च पुरुषार्थः, यथा—स्वर्गादिर्ज्योतिष्टोमादिश्च। दध्यादि तूभयरूपम्, दध्ना जुहोतीति फलासंयुक्तवाक्येन क्रत्वर्थत्वात्, दध्नेन्द्रियकामस्य जुहुयादित्यनेन फलाय विधानात् पुरुषार्थत्वात्। तदुक्तम्—'एकस्य तूभयत्वे संयोगपृथक्त्व'मिति। संयोगो वाक्यान्तरं तस्य पृथक्त्वं भेदः एकस्य उभयार्थत्वे नियामक इत्यर्थः। क्रत्वर्थ

(१२७) निखिलधर्म्मस्य क्रत्वर्थत्वादिभेदेन त्रैविध्यं दर्शयति तत्रेति। उदाहरणान्यत्र सर्व्वाण्येव सुगमानि।

प्रयाजादौ क्रतुः प्रयोजकः, पुरुषार्थे फलं प्रयोजकम्। प्रयोजकत्वं नामानुष्ठापकत्वमित्यर्थः। विधिर्यदर्थं यदनुष्ठापयति स तत्र प्रयोजकः। दर्शादिविधिः स्वर्गाद्यर्थं दर्शादिकमनुष्ठापयतीति स्वर्गादिर्दर्शादौ प्रयोजकः। प्रयाजादिविधिः प्रयाजादीन् दर्शाद्यर्थमनुष्ठापयतीति दर्शादिः प्रयाजादीनां प्रयोजकः। दध्यानयनविधिर्दध्यानयनमामिक्षार्थमनुष्ठापयति न वाजिनार्थम्, आमिक्षार्थं दध्यानयनानुष्ठाने सति वाजिनस्य स्वतः सिद्धत्वात्, अत आमिक्षैव दध्यानयने प्रयोजिका, न वाजिनम्। पुरोडाशकपालेन तुषानुपवपतीति तुषोपवापाङ्गत्वेन पुरोडाशकपालं विधीयते, तथापि तुषोपवापः कपालस्य प्रयोजको न भवति, पुरोडाशार्थमुपात्तेनैव कपालेन तुषोपवापसिद्धेः, किन्तु पुरोडाश एव कपालस्य प्रयोजक इत्याद्यूह्यम्।

ननु (१३८) विधिना साङ्गं प्रधानं कर्त्तव्यतया चोद्यते, तत्राङ्गानां प्रधानानाञ्च कर्म्मणां बहुत्वात् क्रमेणानुष्ठानं वाच्यम्, तत्क्रमनियामकं प्रमाणं किमिति चेन्न, श्रुत्यादीनामेव (१३९) क्रमनियामकत्वात्। तथाहि—अध्वर्य्युर्गृहपतिं दीक्षयित्वा

---

(१३८) इदानीं क्रमविधायकं शास्त्रं सोदाहरणं निर्दैष्टुं प्रथमं पृच्छति नन्विति। परञ्च किमित्यनेनान्वयः।

(१३९) श्रुत्यादीनामेवेति। आदिशब्देनार्थपठनस्थानमुख्यप्रवृत्त्याख्यानां पञ्चानां ग्रहणं। एषां लक्षणमुक्तमर्थसंग्रहे। तत्र क्रमपरवचनं श्रुतिः। तच्च द्विविधं केवलक्रमपरं तद्विशिष्टपदार्थपरञ्चेति। तत्र वेदं कृत्वा वेदिं करोतीति केवलक्रम;

ब्रह्माणं दीक्षयतीत्यत्र क्वाश्रुत्या गृहपतिदीक्षानन्तरं ब्रह्मदीक्षेति श्रौतक्रमः। समिधो जयति तनूनपातं यजतीत्यादौ विधिवाक्यपाठक्रमादेव समिधादियागानुष्ठानक्रमः। अग्निहोत्रं जुहोति यवागूम्पचतीत्यत्र यवागूपाकस्य होमार्थत्वेन पाकात् पूर्वं होमस्य कर्त्तुमशक्यत्वात् पाठक्रमं त्यक्त्वा अर्थक्रमः स्वीकर्त्तव्यः। अर्थः प्रयोजनं होमरूपं तदधीनः क्रमोऽर्थक्रमः (१४०)। तेन पूर्व्वं पाकः पश्चाद्धोमः। तथा सप्तदश प्राजापत्यान् पशूनालभेतेत्यत्र सप्तदशपशुद्रव्यकप्रजापतिदेवताकसप्तदशयागाः कर्त्तव्यत्वेन बोधिताः। तत्रोपाकरणाख्य आद्यः पदार्थो यतः कुतश्चिदारभ्य यत्र क्वचित् पशौ समापनीयः, नियोजनादिकन्तु येन क्रमेणोपाकरणं प्रवृत्तं तेनैव क्रमेण कर्त्तव्यम्। कथं ? प्रकृतावग्नीषोमीयपशोरेकत्वेन उपाकरणमादौ कृत्वा द्वितीयक्षण एव नियोजनं तृतीयक्षण एव प्रोक्षणम्, व्यवधानप्रयोजकाभावात्। अत्र तु सप्तदशपशूनां सहानुष्ठेयत्ववचनात् प्रथमतो यत्र क्वचित् पशौ कृतमुपाकरणं स्वाश्रयकर्त्तव्यनियोजनाय षोड़शभिः क्षणैर्व्यवधानं सहते न त्वधिकैः, तत्रोपाकरणक्रमेण नियोजनं प्रथमपशावकृत्वा पश्वन्तरेषु नियोजनं कृत्वानन्तरं

---

परं। वषट्कर्त्तुः प्रथमभक्ष इति तु क्रमविशिष्टपदार्थपरं। स्वयं केवलक्रमपरोदाहरणमाह अध्वर्य्युरिति।

(१४०) यत्र प्रयोजनवशेन क्रमनिर्णयः सोऽर्थक्रमः। एवं पदार्थबोधकवाक्यानां यः क्रमः स पाठक्रमः। स्थानं नामोपस्थितिः। प्रधानक्रमेण योऽङ्गानां क्रमः स मुख्यक्रमः।

प्रथमपशौ नियोजनकरणे षाड्गुण्याधिकक्षणव्यवधानं शास्त्राननुमतमापद्येत। तन्निरासायोपाकरणं येन क्रमेण प्रवृत्तं तेनैव क्रमेण नियोजनादिकं कार्य्यमिति प्रवृत्तक्रमः (१४१)। तथा ज्योतिष्टोमे औपवसथ्यमहदारभ्य क्रमेणानुष्ठेयानामग्नीषोमीयसवनीयानुबन्ध्यानां पशूनां त्रयाणां साद्यस्क्राख्ये सोमयागे 'सह पशूनालभेत' इत्येकदानुष्ठानलक्षणं साहित्यं बोधितं, तदपि सवनीयस्य स्थाने विहितं, तत्र प्राकृतक्रमं परित्यज्य सवनीयस्य स्थानसाहित्यविधानादौ सवनीयपशोरुपकरणं ततोऽग्नीषोमीयस्य ततोऽनुबन्ध्यायाः इति स्थानात् क्रमः। श्रुत्यादिवशात् पूर्वमहरौपवसथ्यम्। तथा दर्शे सान्नाय्यधर्माणां शाखाच्छेदनादीनां पूर्वमाग्नेयधर्माणां निर्वापादीनाञ्च अनन्तरं प्रवृत्तावपि मुख्ययोराग्नेययागसान्नाय्ययागयोर्मध्ये आग्नेययागस्य पूर्वमनुष्ठानान्मुख्ययागक्रमेणादावाग्नेयपुरोडाशस्य प्रयाजशेषाभिधारणं ततः पयसोऽभिधारणमिति मुख्ययागक्रमादभिधारणक्रमः। इत्येवं श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिक्रमैरेव कर्म्मानुष्ठानम्। अन्यथानुष्ठाने वैगुण्यमित्यलम्।

इति श्रीकृष्णयज्वकृता मीमांसापरिभाषा समाप्ता।

---

(१४१) सहप्रयुज्यमानेषु प्रधानेषु सान्निपातिनामङ्गानामावृत्त्यानुष्ठाने कर्त्तव्ये द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थक्रमाद् यः क्रमः स प्रवृत्तिक्रमः। षण्णामेषां प्रत्येकमेकमुदाहरणं दर्शितं। श्रुत्यादीनाममीषामेकत्र समावेशे पारदौर्ब्बल्यमपि पूर्व्वोक्तरीत्या विज्ञेयमिति शिवमस्तु।

इति श्रीमांशभूषणस्मृतितीर्थविरचिता मीमांसापरिभाषाटीका समाप्ता।

---

# विक्रेय-पुस्तकानि

१। पातञ्जल-योगसूत्रम्—मणिप्रभाटीका-हिन्दी-वङ्गभाषानुवादेन च सहितम् १॥०

२। सांख्यसारः—[विज्ञानभिक्षुविरचितः] टीकया सहितः ॥०

३। सांख्यकारिका—गौडपाद-कारिका-विस्तृतटीका तथा वङ्ग-भाषानुवादेन च सहिता ॥०

४। किरातार्जुनीयम्—[भारविकृतम्] अन्वय-वाख्यान्तर-कवि-कथा-पौराणिकेतिवृत्त-भारतचित्र-अर्जुन-तपस्यास्थान-निर्देश-हिन्दी-वङ्गानुवादैश्च सहितम् सम्पूर्णम् २)

५। रचनाशिक्षा—अयमेव अधुनातनरीत्यनुसारि रचनाविषयकं सर्व्वोत्कृष्टपुस्तकम्। प्रवन्धांश्च वृत्तान्तात्मक, विवरणात्मक, चिन्तात्मकभेदेन पञ्चाशदुर्द्धाः प्रबन्धाः सन्निवद्धाः सन्ति। संक्षेपतः एतादृशमभिनवविषयालङ्कृत-पुस्तकम् अद्यापि मुद्रणयन्त्राधीनं नासीत् २)

६। प्रवन्धकल्पलतिका—अस्मिन् ग्रन्थे राजकीयकाव्यप्रथम-मध्यम-उपाधि-परीक्षापाठ्यानां सर्व्वेषाम् पुस्तकानां विस्तारिता समालोचना, नायकादिनिरूपनम्, वस्तु-संक्षेपः। परीक्षोपयोगी एतादृशोग्रन्थः संस्कृत-भाषासु द्वितीयो नास्ति, १॥०

प्राप्तिस्थान—संस्कृतपुस्तकालय

५८, कर्णवालिस ष्ट्रीट, कलिकाता